किं च—

सदा चतुर्वर्गनिसर्गकारणं
महाविपत्पङ्कजमत्तवारणम् ।
अघापहन्तुर्विभु[1]मङ्गलोदधे-
र्हृदम्बुजे तच्चरणाम्बुजं दधे ॥ १३ ॥[2]

किं च—

मुखे विचुम्बन्नपि यो भयप्रदो
दुनोति दृष्ट्वापि च यः खलः खलु ।
सशङ्कमन्तः सततं प्रकुर्वत-
स्ततो भुजङ्गादपि[3] को बिभेतु न[4] ॥ १४ ॥

पुनः सम्प्रार्थनम्—

द्विजिह्वकोत्सारणसन्निधायिनो
निसर्गतः सन्ततपक्षपातिनः ।
रसप्रदेऽस्मिन् कलयन्तु निर्वृतिं[5]
चिरं मयूरा इव साधवो मम[6] ॥ १५ ॥

किं च[7]—

एष यद्यपि[8]प्रबन्धो विधुरिव दोषाकरस्तदपि ।
साधुकरपातमात्राद्भूयान्मे कुवलयानन्दी ॥ १६ ॥

अपरं च प्रार्थ्यते—

सन्तोषवन्तः स्वत एव सन्तो गृह्णन्तु विज्ञापनमेतदन्तः ।
[9]कृतावधाना गुणगौरवांशे[10] न दूषणे जागृत मत्कृतेऽस्मिन् ॥ १७ ॥

---

1. ङ—र्वहु
2. क, घ, च—Mss. omit the sloka
3. ग—भुजङ्गादिव
4. ग—नो
ङ—Ms. omits the sloka
5. घ—निर्वृत्ति (सुखं)
6. ङ—चिरं मयूराच्छिवमाधवो मम
7. ग—अपरं च
8. क, घ, च—यदपि
9. ङ—भृतावधाना
10. क—गौरावांशे
च—गुणगौरवं मे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अथ वर्णनीयं वस्तु प्रस्तौति[1]—

गङ्गवंशावतंसानां[2] राज्ञामाज्ञानपेक्षया ।
जातोऽस्मि गुणलोभेन कीर्त्तिकीर्त्तनकौतुकी ।। १८ ।।

तत्रापि वैतालिकयोः [3]कयोरपि परस्परम् ।
प्रश्नोत्तरापदेशेन मयाभिमतमुच्यते ।। १९ ।।

तद्यथा—

यो लेभे [4]मगधेन्द्ररायपदवीं कर्णाटभूमिश्वरात्
जित्वा संसदि वन्दिवृन्दमखिलं वादेषु वाग्डम्बरैः ।
अध्येता विरुदावलीषु समये भोगावली[5] पाठकः
संजातो जगदीशवीक्षणरसे विद्यार्णवः कौतुकी ।। २० ।।

स च—

गोदावरीदक्षिणतीरवासी
युवा शुभाचारपरो विलासी ।
दिदृक्षया श्रीजगदीश्वरस्य
विद्यार्णवः प्राह कदापि जायाम् ।। २१ ।।

विद्यार्णवः—प्रिये, लीलावति !

दुष्पूरोदरपूरणाय परितः प्रायो मया भूतले
के देशाः परिशीलिता न बहुशो निर्व्याजमर्थार्थिना ।
अद्य श्रीजगदीशवीक्षणमहालाभैकलोभाकुलम्
क्षेत्रे श्रीपुरुषत्तोमे जिगमिषां धत्ते मदीयं मनः ।। २२ ।।

---

1. ग—अथ कविवर्णनीयं वस्तु प्रस्तावना द्वारेण निर्दिशति ।
ङ—अथ कविवर्णनीयं वस्तु प्रस्तावनाद्यादरेण निर्दिशति
2. ङ—गङ्गवंशाब्जहंसाना
3. च—द्वयोरपि
4. क—मागधेन्द्र
5. क—रोगावली

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

एतदाकर्णनेन प्रपञ्चितरोमाञ्चाडम्बरेण कदम्बकुसुमानुकारिणी लीलावती सानन्दं प्राह, महाभाग !

नरेन्द्राणामुच्चैर्द्रविण[1]मदिरामत्तमनसां
पुरः स्थित्वा स्तोतुं वलति धनलोभेन तव यत् ।
तदेतच्चित्तं चेन्मुरहरकथा कौतुकि तदा
न केषां पूर्वेषां सुकृतपरिणाहः[2] परिणतः ॥ २३ ॥

इति लीलावत्यां [3]प्रियचिकीर्षामभिनन्दन्त्यां सत्यां—

विद्यार्णवः—प्रिये, सत्यमाह भवती[4]। कुत्रापि[5] पित्रादीनां पुराकृतसुकृतादृते[6] न कश्चित् भागवत-गन्धसम्बन्धमनुभवति। पुरा किल[7]—

भर्त्तारं प्रणयावरुद्धहृदया सेवाभिराराध्ययद्
वव्रे दक्षसुतादितिः कृतधियां नप्तारमग्रेसरम् ।
तेन श्रीशकथासुधारसनदीकल्लोलदोलायितो
जातो दैत्यकुलेऽप्यसाधुनिकृती[8] [9]प्रह्लादनामाऽसुरः ॥ २४ ॥

वदन्ति च—

वाञ्छन्ति पितरो नित्यं पितृलोकनिवासिनः
अप्यस्माकं कुले कश्चित् कृष्णो तृष्णां प्रसारयेत् ॥ २५ ॥ इति

लीलावती—भक्त्या[10] वलितान्तःकरणा[11] कान्तमुद्दिश्य[12] सवैराग्यं पृच्छति। नाथ !

संसारपाशनिस्पन्दै[13]र्मन्दैरेवास्मदादिभिः
[14]आत्मनीनमनायासं यत् कर्त्तव्यं तदादिश ॥ २६ ॥

---

1. च—द्रविणं=धनं
2. घ—परिणाहः=पुञ्ज (ज)
3. ग, ङ—भर्तुं
4. क—Ms. omits the line
5. च—पुगादीनां
6. घ—सुकृताद्दते=सुकृतं विना
7. ग, ङ—श्रूयते च
8. क—कृता
9. क, ख, घ—प्रह्लाद
10. क—उक्त्वा
11. ग, ङ—वर्जितान्तः
  च—सवलितान्तः करणा
12. क, घ, च—'मुद्दिश्य', is omitted
13. क, च—निस्यन्दै
14. घ—आत्मनीन=आत्मनेहितं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्यार्णवः—प्रिये ! एवं यदि जिज्ञासुरसि तर्हि श्रूयताम्, अयमेव संसारिणां संसारविच्छित्तये सुखकरोपायः[1] ।

लीलावती—स च कीदृशः ?

विद्यार्णवः—अवधार्यताम्—

गन्तव्या दुरितापनोदनकरी तीर्थावली शक्तितो[2]
हन्तव्या विषयानुबन्धविषमा दुर्वासना दूरतः ।
प्रष्टव्यो गुरुरेव संशयपदं नत्वा पदाम्भोरुहे
द्रष्टव्यो नवनीलशैलशिखरे वृन्दाटवीचन्द्रमाः ॥ २७ ॥

लीलावती तदनु नन्दनन्दननामधेयाकर्णन[3]भागधेयेन[4]क्षणमुन्मनायते ।

विद्यार्णवः—( दृष्ट्वा स्वगतम् ) अहो, मुग्धस्वभावानामपि कामिनीनां भक्तिवैराग्यशोकहर्षादिषु अस्मदाद्यपेक्षया सुदृढ एवाभिनिवेशो भवति । पुरा किल

क्षुत्क्षामेऽन्नजिघत्सयाभ्युपगते[5] नन्दात्मजे मन्दता-
मासेदुर्द्विजपुङ्गवाः क्रतुकृतव्यापारभारोद्धुराः ।
श्रुत्वा तत्तदवेक्षणक्षणपरास्तत्कालमत्यादरा-
दन्नं नैकविधं तदम्बुजदृशः कृष्णे सतृष्णा[6] ददुः ॥ २८ ॥

इति । ( पुनः प्रकाश्यम् ) प्रिये, धन्याऽसि ।

यस्यास्ते व्रजराजनन्दनकथापीयूषपानोत्सवाद्[7]
धत्ते फुल्लकदम्बडम्बरतुलां रोमाञ्चितेऽयं तनुः ।
दृष्ट्वा[8] श्रावणवारिदायितमथो तत्पादपाथोजयो[9]-
श्चित्तं मत्तदशामुपेत्य रमते नाद्यापि विश्राम्यति ॥ २९ ॥

अनन्तरं क्षणात् प्रकृतिमासेदुषी लीलावती व्रीडितेव भर्त्तारं प्रति भणति—नाथ ! यदि न प्रतिवध्नासि तर्हि किञ्चिदर्थये ।

---

1. घ, ङ, च—सकरोपाय
2. ङ—तीर्थाटवी सर्वतो
3. क—द्वर्णल
4. घ—भागधेयेन=भाग्येन
5. ख—जिघृक्षयात्मयाभ्युपगते
   च—जिघृक्षयाभ्युपगते
6. क—सतृष्णे
7. ङ—व्रजराजकथामाकर्ण्य कर्णान्तरे
8. ङ—दृष्ट्वा
   च—दृष्ट्या
9. क—पाथोदयो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्यार्णवः—( श्रुत्वा स्वगतम् ) इयं जगदीशदिदृक्षया प्रतिष्ठासुना मया सह जिगमिषुरिव[1] प्रतीयते।
( प्रकाशम् ) प्रिये ! किं तत् ?

लीलावती—नाथ ! निवेदयामि। सकलधर्मचर्यासु अपरिहार्या भार्या इत्यार्याणां मर्यादा। यथा वा[2] रोचते महाभागाय।

विद्यार्णवः—तर्हि किं क्षेत्रोद्देशेन मया सह प्रतिष्ठासुरसि ?

लीलावती—तदनु तत्रोत्कण्ठातिरेकं सूचयन्ती प्राह ! नाथ—

क्षेत्रं प्रतिष्ठासुरसीति यन्मां
ब्रूषे न तन्मे परितोषहेतुः।
यतस्त्वदुक्ताक्षरधाटिकायाः
प्रमोषमन्तः प्रतिचिन्तयामि ॥ ३० ॥

विद्यार्णवः—( स्वगतम् ) किमुक्तम्, किमुक्तम्, त्वदुक्ताक्षरधाटिकायाः प्रमोषमन्तः प्रतिचिन्तयामीति। (पुनः पुनर्विमृश्य क्षणाच्छिरःकम्पमभिनीय) अहो, क्षेत्रवासं कामयमानायाः[3] स्मेराननाया उपन्यासगाम्भीर्यम्। ( प्रकाश्यम् ) प्रिये, सकलमनोरथानामुपरि सार्वभौमत्वेनाभिषिक्तस्तवायं मनोरथः।

किन्तु—

अपि श्रितस्वस्तटिनीनिकुञ्जै-
रनेकजन्मार्जितपुण्यपुञ्जैः।
जनैरुपेतोऽ[4]भिजनै[5]र्दुरापा
क्षेत्रे स्थिति यत्र वियन्ति तापाः[6] ॥ ३१ ॥

---

1. ग, ङ—गन्तुं विवक्षुरिव
2. ग, ङ—आर्याणां समुदाचारः-तद्यथा
3. ग, ङ—प्रार्थयमानयाः
4. क—वनैरुपेता
5. क, च—र्जवकै
घ—अभिवनै। वनै इति टीका
6. ङ—यस्य कियन्ति पापाः
च—यत्र विपत्तिपापाः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीलावती—(श्रुत्वा स्वगतम् ) धिक् धिक् ! लाटकर्णाटादिदेशविशेषानुरागानुबन्धेन कुर्वाममनाथागि-तमस्यान्तःकरणं[1] न श्रोत्रवार्ताय स्पृहयति इति निर्विण्ण[2] ( प्रकाशम् ) नाथ !

लिलङ्घिषा यथा पङ्गोर्यथान्धस्य लुलोकिषा ।
यथा विवक्षा मूकस्य तथाऽयं मे मनोरथः ॥ ३२ ॥

विद्यार्णवः—सखि ! एवं किमुच्यते । कृपासिन्धुकृपाबलेन[3] पङ्ग्वन्धादीनामपि न किंचिद् दुष्कर-मस्ति । तदुक्तं श्रीधरस्वामिपादैः—

"मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥" इति

लीलावती—नाथ ! अलं नभोन्तरावलम्बस्य सुधाकरबिम्बस्य करासादनचिन्तया । तदिदानीं प्रकृतमनुसृत्य जन्मना सह नयने कृतार्थयावः ।

किं च—

संभाराः सम्भ्रियन्तां[4] सकलपरिजनावेतनेनाद्रियन्ताम् ।
पाथेयान्याद्रियन्तां[5] निजगुरुचरणाः प्रच्छया सत्क्रियन्ताम् ।
भूपा मे संस्क्रियन्तां प्रथमवसतये किंकरा व्याप्रियन्ताम् ।
विप्रा हि प्रायशो ये विहितविधिकृतस्तं शुभाय व्रियन्ताम् ॥ ३३ ॥

किं च—

दिग्वारतारतिथिलग्नशशाङ्कनाड़ी[6]
नक्षत्रयोगकरणग्रहचक्र[7]शुद्धौ ।
होरामते स्वरमतेऽथ यदुत्तमं स्यात्
तस्मिन् दिने विरचय प्रयतः प्रयाणम् ॥ ३४ ॥

1. च—ममान्तकरणं
2. च—निश्चल्य
3. ग, ङ—करुणार्णव करुणावलेन
4. ङ—संभ्रियन्तां
5. क, घ, च—पाथेयान्याभ्रियन्तां
ङ—पाथेयान्याव्रियन्तां
6. ङ—नाभी
7. ङ—शुक

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्यार्णवः—( सस्मितम् ) अहो, भगवद्दर्शनोत्सवोत्सुका लीलावती कीदृक् त्वरते[1]।

लीलावती—महाभाग !

श्रेयांसि वहुविघ्नानि शुभं शीघ्रमिति त्वया।
यदुक्तं वहुशस्तेन हन्तगन्तुमतित्वरे[2] ॥ ३५ ॥

विद्यार्णवः—प्रिये, उचितमेतत्।

यत्र[3] श्रीजगदीशपादतुलसी पत्राग्रमात्रस्पृशे
ब्रह्माद्याः स्पृहयन्ति निर्जरगणाः मर्त्येषु वा का कथा।
तत्र श्रीपुरुषोत्तमे मुररिपोः श्रीगुण्डिचालोकने[4]
केषां साधुसचेतसां न वलते गन्तुं च रन्तुं मनः ॥ ३६ ॥

( पुनः संस्मृत्य )

द्वित्राः कुत्र क्वचापि त्रिचतुरगुणिताः[5] पञ्चषाः क्वापि देशे
तुष्यन्तो[6] हृष्यमाणा[7] मुरहरकथयाऽन्योन्यमालिङ्ग्य गाढ़म्।
आनन्दाश्रुप्रवाहस्थगितनिजदृशःसान्द्ररोमाञ्चिताङ्गः
क्षेत्रे कं[8] नातिमात्रं हरिरससुधया साधवः प्लावयन्ति ॥ ३७ ॥

तत्र यदि त्वरसे तद्धन्याऽसि।

लीलावती—नाथ !

सम्मर्दे[9]मृद्यमाना दधति हृदि मुदं यत्र[10] वेत्रप्रहारं
लब्ध्वा लुब्धा[11] मुरारेर्वदनशशभृतो दर्शनानन्दसौख्ये।
के वा देवा न सेवावसरमधिगताः सन्ततं संचरन्त[12]
स्तत्र क्षेत्रे निवासः क्षणमपि कृतिनां भाति चेद्भूरिभाग्यैः[13] ॥३८॥

1. ग, ङ—भगवद्दर्शनयात्रायामौत्सुक्यातिरेको लीलावती त्वरयति
2. क, घ—मधित्वरे
3. क, घ, च—क्षेत्रे
4. ग—नानोत्सवालोकने
ङ—यंत्रोत्सवालोकने
5. ग, ङ—कुत्राप्युपेताः क्वचन त्रिचतुराः
6. ग—माद्यन्तो
7. ङ—माद्यन्तोऽनूद्यमाना
8. क, घ, च—के
9 घ—सम्मर्दे=जनता
10. च—क्षेत्रे
11. क—लब्धा
ङ, च—लब्ध्वा
12. ङ—सञ्चितस्ते
13. ग—स्तस्मिन् क्षेत्रे निवासः क्षणमपि कुधिया शक्यते केन लब्धुम्।
ङ—यत्नेनवासः गणमपि दुधिया शक्यतेऽनेन लब्धुम्।

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्यार्णवः—प्रिये ! मनसि गृह्यताम्—

नालोकि येन जगदीशमुखारविन्दम्[1]
नागामि येन पुरुषोत्तमनामिका पूः[2] ।
नाध्यायि येन भगवद्गुणनामधेयम्
किं तस्य लोचनपदाननसंग्रहेण ॥ ३९ ॥

लीलावती—नाथ ! अपि सत्यं मदीया जन्मान्तरीयसत्कर्मकल्पलता फलदायिनी संपद्येत येन भागवतीं पुरीं नयनगोचरीं करिष्यामि ; ( पुनः भर्त्तारं प्रति ), महाभाग, विचिन्त्यतां प्रयाणोचितः समयः । किमिति विलम्बसे ?

विद्यार्णवः—( विहस्य, मुहूर्त्तं विभाव्य ) प्रिये !

[ जीवे कर्कटकोटरे भृगुसुते यूकोपभोगाकुले
कन्याभोक्तरि सोमगे रविसुते कोदण्डमासेदुषि ।
भौमे याति वृषं नितम्बिनी यदा भूयात्कुलीरोदयो
योगः कश्चन येन यातुरखिलवंशं[3] धरित्रीतलम् ॥ ४० ॥

इदानीं स योगः परिपूर्ण एवास्ति । तेन ][4]—

पुष्यं श्वो भविता न चापि शशिनः पापानुषङ्गादिकम्
तारः साधक एव मे समुदितश्चन्द्रः[5] पुनः[6] सप्तमः ।
तस्मिन् कर्कटलग्न एव सुभगे सत्यं भवत्या[7] समम्
क्षेत्रं श्री पुरुषोत्तमं प्रति मया यात्रा विधेया त्वरात्[8] ॥ ४१ ॥

---

1. च—पदारविन्दम्
2. ङ—भू
3. ङ—अखिलं विश्वं
4. क, घ, च—Mss. omit the bracketed portion.
5. ग—एवमेषु विदितश्चन्द्रः
   ङ—सुविदितश्चन्द्रः
6. ख—स्तथा
7. क—भवता
8. च—त्वरात्-शीघ्रं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किंतु अकालपान्थायास्तव पन्थाः प्रान्तरमिति विचिन्त्यते ।[1]

लीलावती—आर्यपुत्र ! न हि कश्चित् कल्याणकृत् दुर्गतिं तात गच्छतीति श्री भगवदादेशं प्रमाणीकुर्वतोऽपि तव मनसि दुर्गतिशङ्काङ्कुरः कुतः समुद्भिद्यते[2] ? तेन मन्ये—

प्रान्तरेऽपि प्रयातस्य कान्तश्रीकान्तमीक्षितुम ।
स ते पथि चतुर्वाहुः[3] सर्वं निर्वाहयिष्यति ॥ ४२ ॥

विद्यार्णवः—साधु प्रिये, साधु साधु साधु ।

यत्जात्या भीरुरपि भगवदादेशादवष्टम्भेन[4] विपथकापथादिभीतिं लवमपि दूरीकरोषि[5] । इति प्रियाप्रशंसापरः परमभागवतो विद्यार्णवः सकलोपकरणसज्जीकरणाय परिजनानादिश्य तत् तत् कथा कथनावेशितमनस्कत्वेन[6] जाग्रदेव रजनी[7]मयापयन् । ततश्च[8]

प्रातः प्रीतमना निरीय भवनादादिश्य तत् तत्क्रिया
भृत्येभ्यः प्रविधाय सत्वरमसौ स्नानाह्निकादि क्रमात् ।
उत्साहद्विगुणीकृत व्यवसितिर्गुर्वग्नि देवद्विजान्
नत्वा मङ्गलहेतवे हरिपदध्यानैकतानोऽजनि[9] ॥ ४३ ॥

तदानीं[10] ध्याननिमीलिताक्षः[11] कृताञ्जलिर्भूत्वा ( स्वगतम् )

भक्तस्वातान्तरोत्थाशुभपटलमहावारिधेः कुम्भयोनी
लक्ष्मीवक्षोजकुम्भद्वितीय[12]परिसरे[13] [14]तो कवत्संचरिष्णू ।
तत्ताद्दग्दक्षिणाशाविपयगततया सन्ततं जृम्भमाणौ
पादावादावनादेर्दनुतनुजमुपश्चेतसा चिन्तयामः ॥ ४४ ॥

---

1. ग, ङ—किन्तु त्वया सह प्रस्थितस्य ममपन्थाः प्रान्तरमिति विचिन्त्यते ।
2. ग—प्रमाणीकृत्य प्रस्थितस्य ते कुतः शङ्काकुरसमुद्भवः ?
3. ग—महावाहुः
4. क—भगवदादेशात्वष्टम्भेन
   ग, ङ—भगवदादेशविश्वासावष्टम्भेन
   घ—आलम्बनेन इति टीका
5. ग, ङ—प्रान्तरेऽपि निर्भयेन जिगमिषसि
6. ग—तत्कथाकथनावेशमनस्कतया
7. ग, ङ—यामिनीं
8. घ—व्यवसायः
9. ग, ङ—हरिपदं दध्यौ चिरं चेतसि
10. ग, ङ—तद्यथा
11. ग—ध्यानमिलितेक्षणः
12. ग, ङ, च—द्वितय
    घ—द्वितय
13. घ—परिसरे=निकटे इति पोथिटीका
14. च—स्तोक

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

पुनरपि तस्मादेवाध्वनि[1] सुखमाशास्ते—

न खद्योतैर्जुष्टं न रविकृतचेष्टं न विधुरम्
नवीनां यद्वृत्ते[2] गतिमपि न नागाति[3] मधुरम् ।
अपारव्यापारेदयमपद्मनत्वोपकलितम्
विचित्रं तद्विष्णोः[4] पदमविरतं नः सुखयतु ॥ ४५ ॥

पुनरपि सुग्रीवविभीषणादिषु विततानुभावं[5] राघवेन्द्रपादारविन्दममन्दरागः स्तौति[6]—

स्फुरच्छायं स्फीतागमविततशाखान्त[7]रुदितम्
क्षिपद्भूयो योगाकुलितमनसां तापविभवम् ।
लसद्रागोद्रेकादुपनतसुपर्वोपकलितम्
सदा सीताभर्तुः पदकिशलयं पातु पथिनः ॥ ४६ ॥

किं च[8]—

धृता मन्दामोदं[9] भ्रमरहितभावोपकलितम्
श्रियो नित्यावास[10] स्फुटमहिमभासोद्भटतमम् ।
[11]अजीर्यन्माधुर्यच्छलमधुसमेतं मयि जड़ा—
शये पादाम्भोजं स्फुरतु न कथं रावणरिपोः ॥ ४७ ॥

किं च—

तस्य संसारसागरतारकत्वनिर्वाहाय तरणित्वमारोपयति[12] ।

खरांशोः सायुज्यं किमु[13]नलिनमेतत्कलयितुम्[14]
तदा सक्तीभूतं[15] प्रीतिसरसि तत्पादमभजत् ।
इदानीं तेनैतद्[16] यदुपति[17]पदीभूय भजताम्
भवाब्धौ मग्नानामिह तरणिभावं प्रथयति[18] ॥ ४८ ॥

---

1. घ—अध्वनि=पथि इति पोथिटीका
2. क, ख—यद्वयन्ते
   ङ—यद्विभु
3. ख, ग—न चाति
4. क, ख—तद्विष्णोः
5. घ—प्रभावं इति टीका
6. ङ—भूयोऽपि रघुनन्दन चरणारविन्दद्वयादात्मरक्षणं पथि प्रार्थयते ।
7. ङ—शान्तान्त
8. ग, ङ—पुनरपि सोत्साहम्
9. ग, घ—धृतानन्दामोदं
   ङ—धृता मया मोहं
10. ग—नित्याभ्यासः
11. ङ—निनिर्यन्माधुर्य
12. ग, ङ—भूयोऽपि संसारसागर तारकतया तत्र तरणित्वमारोप्य स्तौति
13. ङ—वलिन
14. ग—कथयितुं
15. ङ—तदा सज्जीभूतं
    च—लसत्सक्तीभूतं
16. ग, ङ—तदस्माद्
17. ख, घ, ङ—रघुपति
18. ग, ङ—कलयते

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

स च तदानीं तत्तादृग्ध्यानधाराधिगतधरणिधरपादपङ्कजरसास्वादपीयूषपूरपूरितान्तःकरणतया[1] वृथाविषयासङ्गादेतावन्तं कालं वञ्चितोऽस्मीत्यनुशयानः[2] स्वान्तमुपदिशति—

संसाराम्बुनिधौ निपत्य भवता मोहाम्बुधौ मज्जता
दुःखाम्भोधिपरम्परापरिचयः कीदृङ्न वाऽऽसादितः।
इत्यम्भोधि [3]विशेषगाहनविधिं जानासि चेत् पृच्छसे
हं हो चित्त हरौ कथं न करुणासिन्धौ सकृन्मज्जसि ॥ ४९ ॥

इति सुखविशेषास्वादपरवशतया[4] चिरेण प्रकृतिमापन्नश्चक्षुरुन्मील्य,

पूर्णं तूर्णं स्थापितं कुम्भमग्रे
[5]दृष्ट्वा दृष्ट्वा जाययाऽन्वीयमानः।
उक्ते लग्ने मङ्गलैरस्तविघ्ने
तुष्यन्[6] पुष्ये मागधः सम्प्रतस्थे ॥ ५० ॥

अनन्तरं कटपटकम्बलादि यत्
पदे पदे पथि पथिकैरपेक्षितं[7]।
प्रगृह्य तत् सकलमनाकुलं प्रभोः
प्रतस्थिरे सपदि भुजिष्यपङ्क्तयः ॥ ५१ ॥

1. ङ—इदानीं तद्ध्यानधारासुधास्वादनिश्चितान्तःकरणतया
2. ङ—अनुतप्यमानः
3. ग, ङ—जलावगाहन
4. ग, ङ—ध्यानपरवश
5. ग—जाययाग्रे
6. ग, ङ—हृष्यन्
7. ग, ङ, च—अपेक्ष्यते

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

स च[1]—

देशे देशे प्रविशति पुनर्यत्र यत्राध्वमध्ये[2]
तस्मिन् तस्मिन्[3] धरणिपतिभिः साधु संभाव्यमानः ।
कुर्वन्नुर्वीवलयकथया कौतुकं कौतुकिन्याः
लीलावत्याः श्रमशमकृते[4] मन्दमन्दं व्ययासीत्[5] ॥ ५२ ॥

ते च सर्वेऽपि—

अथाहोभिः कतिपयैरुल्लंघ्य विषयान्[6] बहून् ।
कुम्भिला निकटे रामराज[7]राज्यमुपागताः ॥ ५३ ॥

लीलावती—( विलोक्य सजिज्ञासं ) नाथ !

देशा ये वीक्षितास्तेषु कालिङ्गकलितोदरः[8]
कोऽयं जनपदः श्रीमान् किं नामा किमधीश्वरः ॥ ५४ ॥

विद्यार्णवः— प्रियां प्रति[9]—

आन्ध्राणामेष देशः परिचिनु सुभगे लालनापालनाभि-
र्येषामेषां विशेषान् जनयति परमानन्दमानन्दराजः ।
ते चामी मीननेत्रे विपुल[10]धनमदोन्मादमत्तै कचित्ता[11]-
वित्ताधीशादि तत्तत्सुरगणगणनां गर्वतः कुर्वते किम् ॥ ५५ ॥

---

1. ग, ङ—अथ प्रमोदमान मानसः प्रतिदिनं प्रतिष्ठमानो विद्यार्णवः
2. ग, ङ—र्दत्तहत्तापमोघे
3. ग, ङ—स्थाने स्थाने
4. क, ख, ग, घ, ङ—श्रमाश्रमकृते
5. ग, ङ—लीलावत्या श्रममपहरन्मन्दमन्द प्रतस्थे
6. घ—विषयान्—देशानिति पोथिटीका
7. क—रामराजा
घ—रामराजु
8. क—कलिकोदरः
ङ—कलिनोदरः
9. ग, ङ—प्रिये न जानासि यदि
10. ग, ङ—मनसि
11. [illegible]

इदानीमपि—

दोर्भ्यां[1] श्रीरामराजस्य पूर्ववत् परिपालिताः।
सानन्दाः निष्प्रतिद्वन्द्वाः कलिङ्गाः सुखमासते[2] ॥ ५६ ॥

लीलावती— सर्वतः प्रजानां समृद्धिशालितां[3] निभाल्य[4] बहुधा रामराजप्रशंसापरभर्त्तारं प्रति—
नाथ! एते हि—

कोटीराङ्गदहारकुण्डलकटीसूत्राङ्गुलीभूषणं
ग्रीवालंकृतिभिर्ज्वलन्ति दहनज्वालावलीढा इव।
एषां धान्यगवादिगेहघटना ताम्रारकूटादिना
सौधायन्त्व गृहाणि तानि च बृहत्संभारभाराण्यपि ॥ ५७ ॥

विद्यार्णवः—प्रिये! यदुच्यते तत्सर्वं तथैव। परन्तु ईदृक्संपन्नानामपि विपन्नानामिव कलिङ्गानां दोष विशेषो दुष्परिहर एव।

लीलावती— स च कीदृशः?

विद्यार्णवः—(निवेद्यते) सखि!

एषां दानकथा कथास्वपि मया नाकर्णि कर्णान्तरे
यक्षाणामिव वित्तरक्षणकृतां भोगेषु को वा दरः।
तेनैषा किल दानभोगरहिता सम्पत्तिरप्यद्भुता-
जाता दीपशिखेव शून्यसदनेऽरण्ये यथा मालती ॥ ५८ ॥

---

1. घ—दोर्भ्यां=बाहुभ्यां
2. च—सुखमासते
3. च—समृद्धिशीलतां
4. क—निद्धाल्य
ग, ङ—निभाल्य

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीलावती—नाथ ! तर्हि एतद् जिज्ञासुभिरेव महाभागैरत्र रामराजोऽभिगम्यतामित्युक्तो[1] विद्यार्णवः सपदि लीलावत्या समं क्वचन तरुतले सर्वानवस्थाप्य कतिपय परिवारपरितो निर्गच्छन्नेवापराह्णे भ्रमणार्थमागतं[2] पथि रामराजमद्राक्षीत् । ततो दैवादेव तयोः परस्परावलोकनव्यापारे प्रवृत्ते[3] विद्यार्णवः समुदाचारं संपाद्य[4] दक्षिणबाहुमुद्यम्य राजानं प्रति—जय जय महाराज !

कञ्जाक्षः कमनीयकान्तिकलया कामायुत[5] क्लान्तिकृन्
कोदण्डध्वनिक्लृप्त[6]कम्पकुटिलक्रव्याद[7] कालायितः ।
कोशाधीशकृपाकरः कमलभृत् कादम्बिनीकोमलो
रामः काननकेलिकौतुककलाकारी क्रियान्[8] कौशलम् ॥ ५६ ॥

अयि लोकोत्तरशौर्योदार्यनिधे[9] !

गाङ्गेयं यमुनासमागमवशाच्छ्रामायमाना कृतिः
क्षीराम्भोनिधिरेष सन्ततमपि श्रीकृष्णनिद्रागृहम्[10] ।
निर्यद्गण्डतटीमदान्धमधुपच्छन्नोऽयमैरावणः
शीतांशु शशलाञ्छनः स च हरः[11] कण्ठेतिनीलाकृतिः ॥ ६० ॥

1. ङ—नाथ, तदिजिज्ञासया भवद्भिरद रामराजोऽ-गम्यतामयुक्तो ।
2. च—निर्गच्छन्नेवारात् भूभ्रमणार्थमागतं
3. ग, ङ—निवृत्ते
4. ङ—समाप्य
5. ख—कामायुति
ग, ङ—कमार्बुद
6. ग—छप्त
7. क्रव्याद=राक्षस
8. ङ, च—क्रिया
9. ङ—अथास्य कीर्त्ति प्रतापौ लोकोत्तरतया वर्णयन् भो महाभाग
10. ग—लीलागृहम्
11. क, च—सहचरः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तेनागण्यवदान्यमस्तकमणे:[1] कर्पूरगौरोज्ज्वल-
[2]स्त्वत्कीर्त्तेस्तुलनाकथा कथमहो स्यात्तत्र[3] लोकत्रये ।
न स्याच्चेत्तव चण्डबाहुविनमन् कोदण्डदण्डोद्वल[4]-
त्काण्डव्रातविखण्डितारिनिकरस्फातुल्यकुल्योच्चयः ॥ ६१ ॥

भूयोऽप्यन्यमनस्कं राजानमभिमुखी कुर्वन् स्तौति—भोदेव कलिङ्गेश्वर !

स्थानभ्रष्टतया कुशाङ्कुरहतिच्छिन्नाङ्घ्रिभावादप-
त्राणत्वात् व्यवसायवञ्चिततया वैरूप्ययोगादपि ।
चेतः कैरववृन्दचन्द्रवसुधाचक्रैकचूडामणेः
[5]दीनादूयति सर्वथैव विपदा त्वद्वैरिसीमन्तिनी ॥ ६२ ॥

तदनु रामराजोऽपि मधुरमधुरीरवाकर्णने दत्तकर्णतया[6] अनाकर्ण्येव निर्याति ।

विद्यार्णवः—([7]सक्रोधं किञ्चिदुपसृत्य)

वीणागोष्ठीवधिरसमितौ किं मया प्रस्तुताऽसी-
न्नाट्यारम्भो विनयरहिते[8] हेतुना केन क्लृप्तः[9] ।
न्यस्ता नारी निरुपमरसा हा कुतः क्लीवहस्ते
केनारब्धा स्तुतिरतितरां रामराजाग्रतो मे ॥ ६३ ॥

1. ङ—मण्डलमणेः
2. घ—स्त्वकीर्त्ते
3. ग, ङ—स्यादत्र
4. क—कोदण्डदण्डोद्वलत्
ङ—बाहुदण्ड विनमत् कोदण्ड खण्डोज्ज्वलत्
च—कोदण्ड दण्डोज्वल
5. घ—दीनादूयत पदशब्द प्रतिपाद्य यावदर्थशून्येत्यर्थः
6. ङ—मधुर मधुरी श्रवणविश्राणित श्रवणतया
7. ङ—Ms. Reads 'सवैलक्ष्यस्मितम्' before 'सक्रोधम्'
8. ग, ङ, च—नयनरहित
9. ङ—कृष्णः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

**अहो ! अनभिज्ञेन मयाऽद्य[1],**

किमारब्धा शीर्षे गगनकुसुमैर्वेशरचना
कुतः खे प्रारम्भि स्फुटमुपवनारोपणविधिः[2] ।
धनुश्चोपक्रान्तं किमिति शशश्रृङ्गै रचयितुं
कलिङ्गक्षोणीन्द्रः किमिति धनलोभादनुसृतः ॥ ६४ ॥

तदानीं स्वप्रभुं कर्णाटाधीश्वरमनुस्मृत्य[3] सानुताप[4]माह--अहो !

अलभत मुहुर्मोदं यः प्राक् पुरन्दरपत्तने
मधुमधुकरः पायं पायं सुरप्रसवोत्थितम् ।[5]
स पुनरधुनादिष्टे दुष्टे[6] [7]धरातलमियीवान्
अहह वसतिं[8] धूर्त्ते धत्ते चिराय दुराशया ॥ ६५ ॥

धिक् कष्टम् !

चञ्चच्चन्दनचन्द्रकुन्दकुमुदक्षीरोदहीरो[9]ल्लसद्-
गङ्गातुङ्गतरङ्गवीथिषु पुरा येनैव लीलायितम् ।
सोऽसौ संप्रति हन्त दुर्विधिवलात्कंका[10]कुले पङ्किले
कासारेऽपि दधावनन्यगतिको हंसो रिरंसां मुहुः ॥ ६६ ॥

**अहो लाटकर्णाटादिप्रभुप्रभृतीन् नरपतीनतीत्य वैभवमात्रावलोकनभ्रान्तेन मया वृथा रामराजोऽनुसृतः । यत्र वाङ्माधुर्यमपि दुर्लभमासीदिति भ्रमरापदेशेनात्मानं भणति । अहो ! भवितव्यतायाः प्राबल्यम् ।**

---

1. ङ—पुनरात्मानमनभिज्ञतया कुत्सयन् मया हि
2. ङ—विधुः
3. क, घ, च—तदानीं कर्णाराधीश्वर सम्मान नामनृस्मृत्य
4. ग, ङ—सानुशयं
5. क—सुर प्रसभोर्वाञ्छितिम्
   घ, च—सुर प्रसवोऽञ्च्छितम्
6. क—दुष्टवायं
   च—दिष्टेनाय
7. च—धरातक
8. क, ख, घ—दूहवसतिं
9. ख—नीरो
10. ग, ङ—वशात्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तथाहि—

माकन्दे[1] मकरन्दशालिनि कृता नावस्थितिः केशरे
नारब्धा वसति र्नयेन कलितः[2] कङ्के लिकेलिक्रमः ।
दैवादेव विशालशाल्मलितरो[3]रालोक्य गुच्छच्छविं
भ्राम्यन्भृङ्गयुवा ततो न लभते गन्धं मरन्दं कुतः ॥ ६७ ॥

रामराजः समाकर्ण्यैव झटिति सचमत्कारं पराभृत्य अतिप्रयत्नोपार्जितं चिररत्नखचितं पुरटमुकुटकेयूरकुण्डलकटककटीसूत्राङ्गुलीयकाद्याभरणजातं विद्यार्णवाय सद्यो निवेद्य स्वारूढं साजिनं वाजिनमपि समर्पयत् ।

विद्यार्णवः—तदनु तस्य[4] तादृशमौदार्यमवधार्य अस्थाने क्रोधान्धेन मया अरूम्यक् कृतमिति सानुतापः स्वगतमाह ;

अज्ञानादवधीरितो ममगुरुर्वेदकृतोऽनादरः
क्षिप्तास्चातिथयो वनद्रुममतिः कल्पद्रुमे कल्पिता ।
अन्यत् किं धरणीधरोपलधिया चिन्तामणिश्चिन्तितो
रोषावेशतया[5] यतोऽवगणितः[6] श्रीरामराजः प्रभुः ॥ ६८ ॥

(प्रकाशम्[7])—रामराजः !

प्रत्यर्थीप्रमदप्रदानपटुना[8] कर्णान्तरव्यापिना
वंशोच्छ्रायवता गुणेन भवता[9] ये मार्गणाः प्रेरिताः ।
ते सर्वे यदनल्पमेव न चिरादेकैकशो लेभिरे
जानीमो निगदन्ति हन्त परितस्त्वां स्थूललक्ष्यं ततः ॥ ६९ ॥

रामराजः—( श्रुत्वा विहस्य ) भो मगधेन्द्रराय विद्यार्णवः !

यदस्मासु मधुरमधुरिका[10]श्रवणविश्राणितश्रवणतया[11] किञ्चिदनवहितेष्ववस्थितेषु भवता वृथा तथा दुर्मनायितं, तेनोच्यसे—

1. घ—माकन्दे = चूडे
2. ग, ङ—वासो नाकलि पेशले परिहृतः
3. ग, ङ—दैवाद्दुन्नतिशालिशाल्मलितरो
4. क—साध्श
   क, ख—रोषावेशितया
5. ग, ङ—रोषावेशवशात्
6. ङ—विगणितः
7. ङ—औदार्यं सूचयन्
8. ङ—प्रत्यर्थीप्रथनप्रजानपटुना
9. ग, घ, ङ—भवतो
10. क, घ, च—मधुरिका मधुरिम
11. ग, ङ—कर्णनदत्तकर्णतया

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

वन्दन्तामथ केऽपि वन्दिनिवहा निन्दन्तु केऽप्यपरे[1]
जात्यारब्धगुणेन तेषु न पुनस्तोषोऽपि रोषोऽपि न।
भूमः केवलमेष दासरि जने कार्यान्तरापादनः
व्यग्रे वन्दनचातुरी तु भवतां तात्कालिकी नोचिता ॥ ७० ॥

विद्यार्णवः—(सलज्ज इव विहस्य)[2] रामराज[3] ! साधु भणितम्[4]। परं मया किंचिन्निवेद्यते तदवधारयतु[5] कल्याणाभिनिवेशी देवः।

निश्शेषावनिमण्डलाधिपतिभिः प्रारब्धपूजाभरे
मय्यागत्य भवद्गुणानुगुणनव्यापारसंपादिनि।
[6]सारासारविचारविज्ञजनता प्रेष्ठत्व[7]निष्ठावतो
जातस्ते कथमीदृगद्य [8]मधुरी माधुर्यमात्रे ग्रहः ॥ ७१ ॥

रामराजः—( सहासं ) विद्यार्णवः, किं न जानासि ? येषु योगिनोऽपि प्रभुत्वं परिहृत्य त्रपन्ते[9]। तानि विषयिणां हृषीकाणि निरङ्कुशानीति[10]।

विद्यार्णवः—( श्रुत्वा ससन्तोषं ) महाराजः !

मित्राणि तव वर्द्धन्तां वध्यन्तामपि शत्रवः
यशो दिशो विचरतात् जीव त्वं शरदां शतम् ॥ ७२ ॥

इत्याशीःपूर्वकमभिधाय लब्धनृपानुज्ञस्तुरगवरमारुह्य लीलावती समीपं समुपेतः सर्वं निवेद्य तत्र तरुतले तं दिवसमवसत्[11]।

इतिश्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजिकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
प्रथमः परिच्छेदः।

——: :——

1. ग, ङ—वा कोटिशो
2. ङ—Ms. Omits the words
3. घ, च—महाराज
4. ङ—साधु भणितं महाराज साधु भणितं
5. ङ—तथापि, अवदधातु
6. ग—कृत्याकृत्य
7. ख—प्रभुत्व
ग, ङ, च—प्रष्ठत्व
8. ख—मधुर
9. ङ, च—तपन्ते
10. ग, ङ—अन्येतानि विषयिणां विषयेन्द्रियाणि निरङ्कुशानीति
11. ग, ङ—इत्युक्त्वा लब्धानुज्ञः सपदि वाजिनमारुह्य परावृत्य लीलावती समीपं निष्क्रान्तः।

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# द्वितीयः परिच्छेदः

[ ततः परं सत्वरंमासनान्तात् प्रातः समुत्थाय पुनः प्रयातुम् ।
प्रपच्छ पत्युः पुरतः पुरन्ध्री पथः पृथुत्वं पुरुषोत्तमस्य ॥ १ ॥

लीला—नाथ ! एवमेव प्रयाणरीत्या प्रतिष्ठद्भिरस्माभिः क्षेत्रस्थली कियता कालेन आसादनीयेति पृच्छामि ।

विद्या—प्रिये ! किं पृच्छसि, दुर्गम एवाऽयं मार्गो मासमात्रगमनसाध्यः । ][1]

लीला—तर्हि भागवती श्रीगुण्डिचायात्रा तु स्वल्पदिनान्तरितेति[2] उद्विग्नास्मि[3] ।

विद्या—प्रिये ! किं कुर्म ? दैवानुकुल्यादृते मानुषोपायमात्रसाध्यो नायमर्थ इत्यवधार्यताम् ।

लीला—महाभाग ! कः सन्देहः[4] । जगदीशानुकम्पां[5] विना गुण्डिचायात्रा कथं नेत्रातिथिः क्रियेत ?

तथाहि—

यामासादयतो विशन्ति[6] विषयाः स्वच्छन्दमेव स्वतो
यस्यां धर्मधुरा चिरं[7] करतले नृणां नरीनृत्यते ।
यत्रागत्य समेत्य पापिपुरुषैः[8] कैवल्यमुल्लुण्ठ्यते
कस्तां [9]कृष्णकृपामपास्य लभतां श्रीगुण्डिचां मानवः ॥ २ ॥

---

1. ग—reads the bracketed portion as—
अनन्तरं लीलावती विद्यार्णवं प्रति—महाभाग ! दुर्गम एवायं मार्गो मासमात्रगमनसाध्य इति श्रूयते ।
2. ख—तु
3. ङ—उद्विग्नास्मि
4. ग, ङ—सत्यं खलु
5. ङ—अनुकूल्यं
6. ग, ङ—मिलन्ति
7. ग, ङ—धर्मपरम्परा । च—धर्मधुरा भरं
8. ग, ङ—यत्रान्योन्यमुपेत्य जीवनिकरैः
9. ग, ङ—श्रीश

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तेनोच्यसे, कथं जगदीशानुकम्पासम्पादनीयेति तदर्थमुपायान्तरं चिन्त्यम्।

विद्या—( विहस्य ) मुग्धे ; नरेन्द्रस्य इव सुरेन्द्रस्यापि[1] प्रसादमुपायन्तरसाध्यं मन्यसे ? न जानासि ?

यामाप्तुं सुधियः समाहितधियो[2] ध्यायन्ति बद्धासनम्
यल्लाभाय जितेन्द्रियो गिरिपतिर्जागर्त्ति योगाकुलः।
यत्पात्रीभवितुं भवन्ति विभवो नेन्द्रादयः केऽपरे[3]
सा मे भागवतीकृपा नरपशोर्लभ्यास्तु केनाधुना॥ ३॥

लीला—( सोद्वेगम् ) आर्यपुत्र ! नरपशोरित्येकवचनोपन्यासेनानुमिनोमि, मां परिहृत्य येन केनाप्युपायेन भवता गुण्डिचा सादनीयेति।

विद्या—( लीलावतीमनोगतशङ्काङ्कुरमुत्पाटयन्[4] प्रेमातिरेकमुद्घाटयति ) प्रिये लीलावती[5] !

आपाणिग्रहणोत्सवान्मिलितयोरेकात्मताभ्यासिनो-
र्दृष्टादृष्टफलेषु कर्मसु ययोरासीदभेदोदयः।
अप्यद्यापितथा तथा[6] विचरतोर्दैवात्तयोरावयो-
र्दृष्टः संप्रति तावकः कथमयं भेदग्रहे दुर्ग्रहः॥ ४॥

लीला—( श्रुत्वा सलज्जं विहस्य ) नाथ !

किमिह[7] बहुभिरुक्तैः कार्यमावश्यकं चे-
न्मुरहरविहिताया वीक्षणं गुण्डिचायाः।
तदखिलमपहायोपायमेकं[8] तमन्त-
र्व्रजशरणमनन्यो निश्शरण्यः[9] शरण्यम्॥ ५॥

विद्या—प्रिये, एतादृश दुर्घटवस्तुघटनापाटवं तु भगवतः कूर्मदेवादृते नान्यत्र सम्भावयामि।

---

1. ग, ङ—नरेन्द्रादीनामिव भगवतोऽपि
2. ग, घ—धिया
3. ग, ङ—न पुनर्ब्रह्मादयः केऽपरे
4. ग—मुञ्चयन्
5. ग, ङ—किमिदम्
6. क, ख—विरचतो
7. ग—किमिव
   ङ—किमिति
8. ङ—तदखिलमुपहृत्योपायजातं
9. क, ख—निश्चरण्यः
   ग—निशरण्यं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

[ तन्मन्ये स एव गुण्डिचादर्शनार्थमभ्यर्थनीयः[1] । स च मध्ये मार्गं विजयमानः कार्यार्थिभिरर्थितोनाभ्यर्थनांवितथयति ][2]

लीला—नाथ, तर्हि किमिति विलम्बसे ? ( इत्युत्थाय )

गत्वा गत्वा कतिपयदिनैः श्रीमहेन्द्रोपकण्ठे
कूर्मक्षेत्रं[3] सह दयितया तेन दूरादलोकि ।
यत्रागत्य प्रभुवरकृपावैभवादेव सद्यो[4]
दुष्प्राप्यं यत्तदपि करसात् कुर्वते केन सर्वम्[5] ॥ ६ ॥

विद्यार्णवस्तदनु प्रासादसमीपमासाद्याद्भुताकारं प्राकारं दृष्ट्वा प्रियां प्रति[6]—

घृष्टामृष्टमहोपलैर्विरचितः शक्रोपलैश्छादितः[7]
प्रागुद्गारोत्थिततारतोरणमणिज्योत्स्नादुरीक्ष्यच्छविः ।
व्योमाभोगविगाहिमौलिमिलितः प्रत्यग्रमेघाङ्कुरः
प्राकारः परितः परीत्य पुरतो भाति प्रिये प्रेक्ष्यताम् ॥ ७ ॥

लीला—महाभाग ! महाभागधेयधुराधुरीणानां धुरि आधेयनामधेयस्य कस्यायं कृतिसाध्यता[8]-विषयीभूतः प्रासादः ?

विद्या—प्रिये, किं पृच्छसे ?

श्रीरङ्गेश्वर[9]तुङ्गशैलसदनादानीलभूमिधरम्[10]
क्षेत्रक्षौणिषु वीक्ष्यते सुमुखि यल्लोकेषु लोकत्तरम्[11] ।
वापीकूपतडागसौधवड़भिप्रासादवप्रादितत्
कर्त्तुं कः क्षमतां विना नरपतीन् गङ्गान्ववायोद्भवान् ॥ ८ ॥

1. च—अभ्यर्थनीयः
2. ग, ङ—reads the bracketed portion as—
स च मध्ये मार्गं विजयमानः कार्यार्थिभिरभ्यर्थितः कार्य्यमवश्यमापादयति ततो गुण्डिचादर्शनार्थं प्रार्थ्यमानो नूनं नौ मनोरथं पूरयिष्यति ।
3. ग—कूर्मक्षेत्रे
4. ग, ङ—कृपाटोपभाजो दुरापान्
5. ग, ङ—अर्थान् सद्यः करतलगतान् साधवः साधयन्ति
6. ग, ङ—प्रियायै दर्शयति
7. ङ—घृष्टा घृष्ट महोपलैर्विरचितः शक्रोपलैः श्लाघितः
8. ङ—कृतसौधता
9. क—भङ्गेश्वर
10. च—भङ्गिधरम्
11. ङ—यल्लोकेऽति लोकान्तरम्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

पुनः पुरोऽवलोक्य—प्रिये ! इदं हि दर्शनस्पर्शना[1]दिना महापातकातिपातकोपघातकं श्वेतकुण्डाभिधानं कूर्मदेवसरः संसेव्यताम्[2] ।

[ लीला—( विलोक्य सानन्दम् ) नाथ ! इतो दुराध्वाक्रमणजनितश्रमनिरसीकृतस्य मुखसरोजादेः सरसीकरणाय सरसीं परिशीलयावः ।

विद्या—( तथा कृत्वा ) प्रिये !

उत्फुल्लहल्लकवनीनवगन्धबन्धु
मन्दानिलोपशमिताध्वपरिश्रमाभिः ।
रिङ्गद्विहङ्गमरुतैरुपहूतपान्था-
नैतादृशीह सरसी परिशीलिता मे ॥ ९ ॥ ][3]

लीला—नाथ ! पश्य पश्य,

हंसाः हंसवधूविलासरसिकाः कूजन्ति तारस्वरम्
क्वापि प्रोच्चरतीहि मञ्जुलतमः को यष्टि[4]कानां रवः ।
कोकी क्वापि निशावियोगविधुरं कान्तं भजत्य[5]न्तिके
धन्येऽयं प्रसमीक्ष्यतां रसमयी दीर्घा चिरं दीर्घिका ॥ १० ॥

**विद्या—लीलावती ! अत्रैव कूर्मदेवमाहात्म्यं कीदृगिति साक्षादवेक्षस्व—[6]यन्नवघनघटाटोपसम्बन्धबन्धुरेऽप्यस्मिन् समये हंसानां रिरंसा न व्यरंसीदिति ।**

**लीला—( सश्रद्धम् )[7] नाथ ! अस्मास्वेव भगवतो माहात्म्यमवगन्तव्यं किं स्थानान्तरगवेषणेन[8] ।**

---

1. ङ—स्पर्शादेव
2. ग, ङ—प्रविश्यताम्
3. क, ख, घ, च—omit the bracketed portion
4. क—को क्षष्टिकानां
5. ग, ङ—मनागीषते
6. क, ख, घ, च—omit 'यत्'
7. ग, ङ—सविश्वासम्
8. ग—किमिति स्थानान्तरभावेक्षणेन

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( विहस्य, सत्यं सत्यमित्युक्त्वा सत्वरं निर्गत्य )

अवगाह्य सरः स्वेतं[1] नित्यनैमित्तिकक्रियाः ।
कृत्वा कृताञ्जलिः स्तोत्रं[2] कूर्मदेवपुरोऽकरोत् ॥ ११ ॥

तद्यथा—

येनामन्थि पुरा सुधाजलनिधिः सर्वाद्भुतानां निधिः
कृत्वा मन्दरमुच्छ्रितं सुरकृतं पृष्ठे गरिष्ठे चिरात् ।
तस्मै भक्तजनानुरक्तमनसे पातालमूलस्पृशे
सान्द्रानन्दमहोदयाय महते कूर्माय कूर्मो नमः ॥ १२ ॥

( पुनर्देवमालम्ब्य सप्रार्थनं विज्ञापयति ) देव !

मार्गोऽप्ययमतिदुर्गो वनगहनो नैकयोजनायामः[3] ।
[4]त्रिचतुरदिवसमात्रैर्गम्या तत्पुरी लिप्सा यथा तथा रचय[5] ॥ १३ ॥

इति विज्ञापयन्नेव विद्यार्णवो भगवतः शिरोभूषणीभूतमनुकम्पागलितं ललितं चम्पककुसुममद्राक्षीत् । तच्च शिरसि निधाय तद्दर्शनात् प्रमोदवत्या लीलावत्या सह हर्षोत्कर्ष-कल्पितमना[6] लब्धप्रसादः प्रासादान्निरीय—

[ क्षेत्रे तस्मिन्निलयनिकटे दाक्षिणात्यद्विजानां
कृत्वा वासं चिरपरिचितै[7]रादरादर्चितस्तैः ।
भुक्त्वा पीत्वा मुदितहृदयो[8] यामिनीं यापयित्वा
स्मृत्वा लक्ष्मीपतिचरणयोः प्रातरेव प्रतस्थे ॥ १४ ॥ ][9]

1. ख—तिरश्चेतं । ग, ङ—स्वैरं
2. क—स्तोतुं
3. ङ—अनेकयोजनायामः
4. ग, ङ—कतिपय
5. ग—यात्रा कथं भवतः
ङ—लिप्सो यात्रामृते कथं भवतः
ख—लिप्सा यथा रचय
6. ग, ङ—प्रमोदाकुलितान्तःकरणो
7. ख—विरचिते
ङ—परिवृतैः
8. ग, ङ—प्रमुदितमना
9. क—Ms. omits this sloka

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तदनन्तरं कियन्ति योजनानि गत्वा कृतार्थितसार्थवाहचयस्य भूमितलभागधेयस्य[1] वारुणनामधेयस्य[2] पत्तनस्य परिसरे महेन्द्रतनयां नाम नदीमुपेत्य तया सम्भिन्नस्य सिन्धोर्वेलामाससाद[3]। स च विश्रान्तिकामः-

क्लृप्तालवालसुविशालरसालशाल-
हिन्तालतालकृतमालतमालजाले।
आमोदमोदितमधुव्रतचक्रवाले
तत्रैव वासमतनिष्ठवनान्तराले ॥ १५ ॥

तदानीं स एव-

श्रीकूर्मदेववरदत्तवरप्रसादात्
पुस्फोर[4] किंचिदपि साहसमेतदन्तः।
सांयात्रिकैर्जलनिधाविह यानपात्रे
यात्रां विधाय कलये जगदीशयात्राम् ॥ १६ ॥

( इति विचार्य प्रियां प्रति ) प्रिये ! यानपात्रमधिष्ठाय जलधौ प्रस्थातव्यं चेत्तर्हि गुण्डिचावलोकनीयेति[5] मम परामर्शः। यथा वा प्रियसखी मन्यते।

लीला—( श्रुत्वा उरोनिहत्य रसनां दष्ट्वा जलनिधिमवलोकयन्ती सचकितम् ) आर्यपुत्र ! किमुच्यते ?

अत्युग्रग्राहपुच्छोच्छलितजलकुलैश्छादयन्तीं दिगन्तान्
प्रेङ्खन् कल्लोलजालैः सकलजनमनः कम्पमुत्पादयन्तीम्।
आवर्त्तावर्त्तनोद्यद् भ्रमिरभसवशान्न्यञ्चितो[6] दञ्चितापाम्
चेतः किं तावकीनं जलनिधिपदवीमीहते तन्न विद्मः ॥ १७ ॥

1. ङ—सकलसार्थवाहभागधेयरूपस्य
2. घ, ङ, च—वारुनामधेयस्य
3. ङ—वेलावनमाससाद
4. क—पुंस्फोर
ङ—सुखेन गुण्डिचावीक्षणायेति
5. ग, ङ—पश्यसि
6. ङ—न्यञ्चितो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( सहासम् ) प्रिये ! किं न जानासि ?

यान्त्यायान्ति सहस्रशो विपणिनः पोतेन पाथोनिधौ
तेषां केवलमापणव्यसनिनां किं हीयते वा ततः ।
अस्माकं जगदीशवीक्षणशुभ[1] प्रारम्भसम्भारिणा-
मस्मिन् साहसकर्म[2]कर्मणि कुतः स्विन्नतरा विन्नसे ॥ १८ ॥

लीला—( सकम्पम् ) नाथ ! किं न पश्यसि ? एष हि ।

पारावारोऽन्तरालप्रसृमरमकरग्रामसंग्राम[3]मूर्च्छत्-
पुच्छप्रोत्सारणात्युच्छलित[4]मितरुचिस्वच्छतोयच्छटाभिः ।
स्वर्लोकभ्रंसमाना[5] सरपुरतटिनीसंभ्रमापादिनीभि-
र्दत्ते चित्ते न केषां[6] पयसि सुविषमे हन्त चिन्तां दुरन्ताम् ॥ १९ ॥

विद्या—( प्रियाया विश्रम्भारम्भाय[7] ) प्रिये ! इह हि,

सत्यं[8] सन्ति सहस्रशोऽपि मकराः गर्जन्त्यमी[9] कोटिशो
ग्राहाश्चोग्रतरा भ्रमन्ति परितस्तुङ्गाःभुजङ्गा अपि[10] ।
कान्ते चिन्तय यानपात्रजठरे[11] स्वच्छन्दसंचारिणाम्
मध्ये ते[12] जलचारिणः प्रतिभयाः[13] किं नो विधातुं क्षमाः [14] ॥२०॥

---

1. ग—सुख
2. ग, ङ, च—नर्म
3. ङ—पारानारोह्नतराकोत्थितवरगकरातुच्छसंग्राम
   च—ग्राहसंग्राम
4. ग, ङ—पोत्सारणायच्छलित
5. ङ—भ्रंशमाना
6. ग, ङ—किं ते
7. ग—भयमपनयन्
   ङ—प्रियाभयमभिनयन
8. ग, ङ—ग्राहाः
9. ङ—माद्यन्त्यमी
10. ग, ङ—येऽप्यन्ये जलदन्तिनो नियुतशः खेलन्ति खेलालसाः ।
11. ग, ङ—कुहरे
12. च—सर्वे ते
13. घ—प्रतिभयाः=भयङ्कराः ( पोथिटीका)
14. ग, ङ—अस्माकं जलचारिणः प्रतिभयं किं कर्त्तुमेते क्षमाः ।

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

इति श्रुत्वा लीलावत्यां गुण्डिचालाभलोभेन कृतानुमत्यां निवसत्यां सद्यो विद्यार्णवः सांयात्रिकानाहूय वितीर्णतरस्तरसा[1] प्रस्थातुकामः[2]—

तदनुमनसि कुर्वन् कूर्मदेवाभ्यनुज्ञाम्
द्रुतमभिमतलिप्सा सिद्धये निर्विशङ्कः।
जलनिधिजलमध्ये नक्रचक्रावरुद्धे
व्यधित सह समस्तैर्यानपात्रेण यात्राम् ॥ २१ ॥

ततोऽनुकूलपवनान्दोलनदोलायिते यानपात्रे प्रचलिते—

तत्रो[3]दश्वदवाश्वदुग्रलहरीधारानुसारक्रमा-
दूर्द्ध्वाधो भवदात्मयानचलनैर्भ्रान्त्यातिभीता ततः[4]।
ऊचे मज्जनशङ्कया प्रियभुजामालिङ्ग्य लीलावती
किं कुर्य्यां क्वनु यामि का गतिरहो किं साहसं ते कृतम् ॥ २२ ॥

विद्या—प्रिये ! मा भैषीः। स्वभाव एवायं वहित्राणाम्। तत् किमिति कातरा भवसि ? ( अपूर्ववस्तुविलोकनेन विनोदयात्मानमित्युक्त्वा ) प्रिये ! पश्य पश्य—

पीयन्ते जलदाः जलानि जलधौ प्रच्छाद्य सर्वादिशो
ये मत्तद्विरदेन्द्रयूथमलिनच्छायानुकारित्विषः।
तेऽमी शैलशिलाटवीनगनदी क्षारोर्वरादिस्थले
जीवादृष्टगुणानुसारि परितो वर्षन्ति हर्षावहाः[5] ॥ २३ ॥

---

1. ख—दभिर्णतर स्तरसा
2. ग, ङ—इत्युक्त्वा लीलावतीमाश्वास्य सांयात्रिकानाहूय वितीर्णतरस्तरसा प्रस्थातुमारभत। किं च—
3. क—ततो
4. ग, ङ—भीत्या भ्रमन्मानसा
5. ङ—वर्षावहाः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

इतश्च—

क्वचिन्मकरमण्डली क्वचन धोरणी वा मुचाम्
क्वचित् करिकदम्बकं क्वचन नक्रचक्रं महत्।
क्वचित् विकटकङ्कटाः[1] क्वच वराटिका धाटिका
न किं क्वचन शुक्तयो नयनकौतुकं तन्वते ॥ २४ ॥

किं च प्रिये ! विलोक्यताम्—

एतद्वारिधिवारिहीरकघटा कान्तिच्छटाच्छादितम्
भूयो भाति सुधावदेव धवलं गङ्गाम्बुसङ्गादिव[2]।
माणिक्योपल[3]विद्रुमाङ्कुरकरश्रेणी विभिन्नोदरम्
सन्ध्यांशुप्रतिविम्बचुम्बितमिवारक्तीकृतं रोचते ॥ २५ ॥

लीला—( अदृष्टचरवस्तुदर्शनोत्कण्ठितापि सातङ्क[4]मीक्षते )

विद्या—( सपरिहासम् ) प्रिये !

झम्पद्झम्पासि[5] कम्पाकुलतरशफरी चातुरी चौर्यचर्या[6]
लीलालोलं नभस्वन् मृदुलहरीचलत् पङ्कजातङ्कदायी।
सिंह [7]त्रस्यत्कुरङ्गीनयनचपलता गर्वसर्वंकषश्री
त्वन्नेत्रं मीननेत्रे चटुलतमतया[8] वक्ति[9]सन्तापमन्तः ॥ २६ ॥

लीला—( सरोषम् ) [ महाभाग ! अद्यापि भवता न परित्यज्यते शर्मोदयदायी[10] नर्मोपक्रमः। ][11]

---

1. क—कङ्कटाः only
2. ग, ङ—गङ्गानुसङ्गादिव
3. क—माणिक्योत्पल
4. ङ—सकम्प
5. ङ—झम्पाणि
6. क, घ—चार्या
7. क, ख—त्र्यसत्
8. ग—तरलतमतया
9. क, ग—भक्ति
10. च—शर्मोपदायी
11. ङ—Ms. omits the bracketed portion

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

[ विद्या—प्रिये ! अस्थाने वृथा भीति भागिनी विन्नासे ][1] ।

लीला—नाथ ! अननुभूतचरोऽयमुपप्लवः शूराणामपि कातर्यं जनयेत् । किं पुनर्भीरूणां मादृशाम् ?

विद्या—( सानन्दम् ) प्रिये ! पश्य पश्य—

प्राध्वं[2] प्रध्वंसिताध्वक्लम[3] मृदुमरुदालोल[4]दोलायमानम्
धावद्धीरं पुरस्तात् प्रचलति भवति मानसं स्पर्द्धयैव ।
मग्नं वा नागलोके लहरीपरिचयान्नाकलोकेऽथ लग्नम्
स्वर्गद्वारोपकण्ठे मिलितमिदमभूत्तावकं यानमेतत् ॥ २७ ॥

लीला—( उज्जीवितेवोत्थाय )[5] नाथ ! शरच्चन्द्रचन्द्रिकासंदोहसन्देहदायी[6] कस्यायं प्रासादः ?

विद्या—( विलोक्यैव जयजगेत्युच्चार्य साष्टाङ्गं प्रणिपत्य ) प्रिये ! तदेतत् गङ्गवंशाङ्कुरस्यानङ्गभीमदेवस्य मूर्त्तिमिव यशोवितानमिन्दिरापतिमन्दिरं प्रणम्यताम् ।

लीला—( भक्तिश्रद्धातिशयपूर्वकं तथा करोति । ) ततः सर्वेऽपि प्रतिपोतेन[7] पुगपुन्नागनारिकेलतरुकुलसङ्कुलायां दक्षिणोदधे[8]रुत्तरवेलायामुत्तेरुः ।

विद्या— तत्र स्नात्वा मन्त्रतन्त्रानुसारि
दत्वा तीर्थे देयमभ्यागतेभ्यः ।
लीलावत्या सङ्गतो नीलशैलम्
लक्ष्मीभर्त्तुर्दर्शनाय प्रतस्थे ॥ २८ ॥

लीला—नाथ ! नाथ ! वेलायां प्रकाशमाना किं देवाधिष्ठितेयं[9] प्रासादावली ?

1. ङ—omits this line
2. ग—प्राच्य
3. क, घ—क्रम
4. क, ख—लोक
ग, ङ—न्दोल
5. ङ—सानन्दमुत्थाय ससंभ्रमम्
6. घ, च—omit 'सन्देह'
7. च—प्रतिधौतेन
8. ङ—Ms. adds here स्फुरद्वेलायां
9. च—देशाधिष्ठितेयं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—प्रिये ! नाऽमी देवालयाः । किन्तु,

येऽत्र क्षेत्रवरे युगाकृतपरिपाकात्तनुत्यागिनो-
दह्यन्ते किल यत्र यत्र विधिवत् तत्तत्स्थले सत्वरम् ।
प्रासादा विपुलोपलैर्विरचिताः सम्यक् सुधाशालिनः
स्थाप्यन्ते मलमूत्रदूषणभयात्तत्पुत्रपौत्रादिभिः ॥ २६ ॥

लीला—नाथ ! त्वयेदं बहुशः परिशीलितमिति सकलानि द्रष्टव्यवस्तूनि[1] मह्यं त्वया सुबोधं बोधनीयानि ।

विद्या—( सकलानीति श्रुत्वा विहस्य ) अहो !

भ्रामं भ्राममहर्निशं तत इतो यत्नैक[2]तानात्मना
धात्रा कुत्र किमस्ति वेति[3] गदितुं शक्यं न वर्षायुतैः ।
तत्सर्वं पुनरेकदा कलयितुं लीलावती याचते
कार्य्याकार्य्यविवेकशून्यमनसः प्रायः कुरङ्गीदृशः ॥ ३० ॥

लीला—नाथ ! तर्हि साकल्येन दुर्ज्ञेयं चेत्तर्हि द्रष्टव्येषु वरं विविच्य निरूप्यताम् ।

विद्या—प्रिये ! निभाल्यतामितश्चैतन्यमण्डलीति विदितः संप्रदायप्रवर्त्तकानां परमभागवताना-मावसथः ।

लीला—एते किमिति क्षेत्रोदरमपास्य समुद्रोपकण्ठे निवसन्ति ?

विद्या—( तेषां तत्रावस्थानं प्रकारान्तरेणोत्प्रेक्ष्य प्रियां प्रत्याह ) प्रिये !

लोकानामभियोगिनां सुरपुरादुच्चैः पदारोहणे
तत्कार्य्येऽप्यविलम्बनाय किमिति[4] प्रायो न संपश्यताम्[5] ।
मन्ये दैन्यवशीकृतेन विधिना स्वर्द्वारमारोपि किम्[6]
श्रीचैतन्यमतानुसारिसुजनश्रेणीति निःश्रेणिका ॥ ३१ ॥

---

1. ङ—त्वयेदं बहुशः परिशीलितमिति प्रार्थ्यसे, मम नवगतानि सकलानि द्रष्टव्यवस्तुनि ।
2. च—यत्नैक
3. क—वेत्ति
4. च—अवलम्बनाय किमपि
5. क, ख—संपद्यताम्
6. ङ—दैन्यवशीकृतः किमु विधिः स्वर्द्वारमारोपयत्

लीला—(दूरात्प्रणम्य पुनः कियद्गत्वा) नाथ! पुरतः पवनप्रेरितसिकतातातिभिः प्रावृतप्राकारं कस्यायं प्रासादः ?

विद्या—(प्रासादं वीक्ष्य साष्टाङ्गं प्रणिपत्य) प्रिये! इह कलिकलुषकलितान्तःकरणदुर्लभो गोपिजनवल्लभः प्रतिवसति, यं पुनरात्रत्य, आराममनिवासादाराम गोपीनाथमभिदधति।

यं नत्वा न लुठन्ति जातुजठरे मातुः पुनर्योगिनो
यत्पादप्रवणा भवन्ति भुवने[1] भोगाय भोगाकुलाः[2]।
तं चैनं भुवि भूरि[3] भक्तपटली चित्तैकचिन्तामणिम्
पश्यन् हृष्यति यः स किं न धुनुते स्वर्गापवर्गार्गलम्[4] ॥ ३२ ॥

लीला—नाथ! तर्हि द्रष्टव्य[5] एवासौ निखिलहृदानन्दनो व्रजराजनन्दनः।

विद्या—प्रिये! द्रष्टव्य[6] एवासावित्युच्यते। न जानासि, यमेनं जगदीशनिर्विशेष[7]मत्रत्याः सर्वे परिचरन्तीति। प्रियामभिधाय प्रणिपातपुरःसरं प्रभोः पुरः प्रविश्य परमप्रेमानुबद्धहृदयः कृताञ्जलिः स्तौति।

तद्यथा—
जय जय पङ्कजलोचन। जय जय भवभयमोचन॥
जय जय गोपी[8]लम्पट। जय जय हृतभूसङ्कट[9]॥
जय जय दुर्जनवारण। जय जय सज्जनतारण॥[10]
जय जय मोहनमूर्त्ते। जय जय पावनकीर्त्ते॥

---

1. क—भवने
2. क—रोगाय रोगाकुलाः
3. ङ—गुरुभक्ति
4. ङ—अखिलम्
5. ङ—प्रष्टव्य
6. ङ—प्रष्टव्य
7. क—निर्विवेश
   ख—निर्विशेष
8. ङ—राधा
9. ङ—हृतहृत
10. क, ख—omit this line

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

जय जय हिमधामकोटिप्रभापुञ्जनिर्मथ्यमानस्मिताटोपपर्य्यायनिर्य्यापिताशेषधैर्य्यादिमर्य्यादनात्युच्छ्रितानङ्गकेलिषु सज्जीकृत ! स्वपद[1]पतितदीनवृन्दानुकम्पार्थसम्पादनासक्तभक्तावलीतापनिर्वापणाभीष्टजुष्टा[2]निशक्षोणिविक्षोभकानिष्ट[3]दुष्टालिरिष्टायित उपनतपतगेन्द्रवीक्षाक्षणत्रासकम्पोरगाधीशदोलायमानाननश्रेणीनिश्रेणीविश्राणितस्वोत्तमाङ्गच्युतक्षुण्णनिद्राकषायेक्षण । तद्यथा इति—सुरनिकरनिवारधागामहापौरुषापादनव्यग्रमत्युग्रदोर्दण्डपिण्डीकृताखण्डलास्तत्विषं दैत्यवर्गद्विषं योगनिद्रे शं विद्रावयन् ।

जय जय मसीमुग्धस्निग्धाम्बुद-प्रतिमद्युते !
जय जय कृपापारावार प्रभो कमलापते[4]
रचय करुणालेशं क्लेशं विधेहि विदूरतः ।

( पुनरपि गाढ़ोत्कण्ठं प्रणम्योत्थाय शिरसि बद्धाञ्जलिः सन् )

जय जय माधव जय जय गोपीधव
जय जय वत्सवकारे ।

जय जय सुन्दर जय धृतमन्दर
जय जय कंसमृकारे ।।

[ जय करुणाकर लसदरुणाधर
जय जय गुणगणसिन्धोः ।

जय सुखसागर गोकुल नागर
जय गोपीजनबन्धोः ।।

नलिनसहोदर युवतिमनोहर
दायि दृगञ्चलशाली ।

---

1. ख—स्वजन
2. क—निर्वापणारिष्टजुष्टा
3. ग—विरोधकानिष्ट
4. ग, ङ—Mss. add another line before this line—
"जय जय विधुव्यूह द्रोह क्रियास्तजयानन"

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अररविसङ्कट विलसदुरस्तट
विलुठितघनवनमाली ॥ ][1]

त्वमखिल तापस संयत मानस
कन्दरमन्दर चारी ।

मामवमञ्जुल निचुलित वञ्जुल-
पुञ्ज निकुञ्जविहारी ॥

( पुनरात्मानमुद्दिश्य )

नोवा शङ्करशाङ्करिप्रभृतयः सेवाभिराराधिता
नो कर्णे कलिताः श्रुतिस्मृतिगिरो नैवाति[2] तप्तं तपः ।
तेनानेक[3] विधानसाधनसमाधानाय जागर्षि चेत्
कृष्णं चिन्तय रे मनः प्रतिमुहुः[4] किं वा मुधा खिद्यसे ॥३३॥ [5]

किं च—

हेलोत्पाटित[6]मन्दरं हृदि लुठन्मुक्तावलीसुन्दरम्
प्रेङ्खत् कुण्डलकन्धरं धृतमहागोवर्द्धनोर्वीधरम् ।
चञ्चच्चन्दनबन्धुरं प्रविलसत्[7] वृन्दाटवी सिन्धुरम्[8]
कृष्णं चिन्तय रे मनः प्रतिपदं किं वा मुधा दूयसे[9] ॥ ३४ ॥

( भूयोऽपि स्थानविशेषे स्वरूपं ध्यात्वा )

---

1. क—The bracketed portion is omitted.
2. ग, ङ—नैवापि
3. क—तेनानेन
4. ङ—प्रतिदिनं
5. क—The verse is omitted
6. ङ—हेला पाटित
7. ङ—परिलसत्
8. ङ—सुन्दरम्
9. ङ—प्रतिदिनं किं वा मुधा खिद्यसे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

कूले वा शमनस्वसुः[1] क्षितिरुहो मूले कदम्बस्य वा
गोपीनामधिचत्वरं किमथवा वृन्दावने सत्वरम् ।
वंशीवादनचुञ्चुरं[2] व्रजवधूरासानुसारोद्धुरम्[3]
कृष्णं भावय रे मनः प्रतिदिशं किं वा मुधा धावसि[4] ॥ ३५ ॥

( भगवतो बिम्बाधरमालोक्य साशंसम् )

लाक्षाधातुद्रवादारुणिम[5]तरुणिमोच्छ्रायमुत्सारयन्ती
बिम्बभ्रान्त्या शुकादेरिव मनसि मुहुर्लोभमुत्पादयन्ती[6] ।
प्रातः सन्ध्यायमाना दनुतनुजकुला खर्वगर्वक्षपाया
दत्तां न स्त्रिग्धगात्रे पदमधरतटी नूतना पूतनारेः ॥ ३६ ॥

( तदनु तत्रिग्धां मुरलीमवलोक्य ) अपाहि

गाढान्तं मृदुवातजातकलनप्रेङ्खत्तमालाटवी
बल्लीपल्लवचातुरी मुररिपोर्यस्याङ्गुलिश्रेणयः ।
या तस्य स्फुरिताधरामृतघटी पानावधानोत्कटा
सेयं मुरली मदीय मङ्गलीभावाय संपद्यतं ॥ ३७ ॥

( इति क्षणमुन्मनायते । ) तदनु लीलावती प्रणिपत्योत्थाय स्तौति—

जय जय निर्जरमण्डलमण्डन ।
जय जय दुर्जयदानवखण्डन ॥
जय जय सज्जनलालनहेतो ।
जय जय सुकृतपालन[7]सेतो ॥

---

1. ङ—सुमनस्वसुः
2. ग, ङ—तत्परं । च—चञ्चुरं
3. ग—रासानु रासोद्धरम्
ङ—रास्याभि सारोद्धतम्
4. ङ—कृष्णं चिन्तय रे मनः प्रतिदिशं किं वा मुधा खिद्यसे ।
5. ग—दारुणित
6. ग, ङ—आपादयन्ती
7. ग—कृतसुर
ङ—पालित जनता । च—कृत सुपालन

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

जय जय निगमव्याहृतरीते ।
जय जय विदलित[1]वसुधाभीते[2] ॥
जय जय कौस्तुभमहसामण्डित ।
जय जय केलिकोटिषु पण्डित ॥
जय जय कमला[3]कृतपदसेव[4] ।
जय जय सुरवर जय जय देव ॥

[ इति स्तुत्वा निजपरिजनानुद्दिश्य ][5]—

प्रणमत यदुनन्दनं साधुहृदयचन्दनम् ।
सकलदेवविहितसेव सुरपतिकृतवन्दनम् ॥

मुकुरखण्ड विमलगण्ड हिण्डमानकुण्डलम् ।
निटिलदेश कुटिलकेश मण्डितमुखमण्डलम् ॥

मृदुतरङ्गि नयनभङ्गि[6] खञ्जनरुचिगञ्जनम्[7] ।
जलदजाल नवतमाल मञ्जुमखिलरञ्जनम् ॥

विजितकुन्दरदनवृन्दसस्मितमितवादिनम् ।
युवतिचित्तदलनवित्तवेणुमधुरनादिनम् ॥

विधुर[8] लोक[9] हृदयशोक लुण्ठनविधिलम्पटम् ।
निशितचक्र दलितनक्र हृतकरिवरसंकटम् ॥

---

1. ङ—कुण्ठित
2. घ—हिते
3. ङ—कमलाकृत
4. ग—सेवित
5. ङ—पुनः सर्वानुद्दिश्य
6. क—भृङ्गि
7. ङ, च—रुचिराञ्जनम्
8. ङ—निखिल
9. क—कोक

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

[ इति भक्तिश्रद्धापूर्वकं स्तुत्वा भर्त्तारं प्रति ][1]-

महाभाग ! व्रजाङ्गनानां हृदयं शतकोटिकोटिशतघटितमित्यवैमि यदीदृशस्य पुरुषपुङ्गवस्य सङ्गभङ्गेऽपि विदीर्णं नासीत्[2] ।

विद्या—सखि ! किमुच्यते, न जानासि ?

सजलजलदगात्रे प्रेमपीयूषपात्रे
मुरभिदि[3]गतमात्रे गोकुले किं न जातम् ।
व्रजपुरवनितानां चाक्षुषी वारिधारा
न किमु विरहदोषाच्छ्रावणी प्रादुरासीत् ॥ ३८ ॥

तासां तदानीन्तनं वियोग दुःखमनुस्मृत्य पुनः सास्रमाह, प्रिये !

ध्यायन्तीनां मुरहरवपुः श्रावणाम्भोदनीलम्
गायन्तीनां मधुरिपु[4]यशः पावनं भाविनीनाम् ।
पृच्छन्तीनां पथिकवनिता[5]मागमं नन्दसूनो-
र्नेच्छन्तीनामशनवसने जीव एवावशेषः ॥ ३९ ॥

सखि ! किं ब्रवीमि[6], तदानीं तासाम्—

नास्था गेहे ममजनि तथा नादरः कोऽपि देहे
चित्ते नासीत्पतिसुतकथा कः कुले पक्षपातः ।
किन्तु श्रीमत्सुरपतिशिलास्तम्भधिक्कारकारी
गोपालीनां मनसि ददृशे कोऽपि गोपी तनूजः ॥ ४० ॥

किं च लीलावती ! गोचारणाय भगवति नन्दनन्दने वृन्दावनं गतवति सति दिवसमात्र विरहजनितवाधायाः राधायाः ललिताख्यया सख्या सह संलापो भवत्या न श्रुतः ?

---

1. ङ—इति स्तुत्वा विद्यार्णवमुद्दिश्य
2. ङ—न स्यात्
3. क—मुरभिवि
   ख—मुरभिद
4. क, घ—अघरिपु
   ङ—दिशि दिशि
5. क, घ, च—जनता
6. क, ङ, च—ब्रवीषि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—नाथ। नहि नहि। अभिधीयताम्।

विद्या—श्रूयतां तर्हि ! श्रीराधा भणति—सखि ललिते !

कामकाण्डदहनादसुबाधां कामकाण्डविरहेन भजामि।

ललिता— यादवाधि[1]महरद्यदि सा ते यादवाधिपदयास्ति भयं क॥ ४१॥

राधा—सखि ! जीवनायकमृते तमिदानीं जीवनाय कलयेकमुपायम्।

ललिता— मारमारणविधिप्रतिघाते[2] मारमारमणविस्मृतिमीयाः[3] ॥ ४२॥

[ लीला—ततस्ततः।

विद्या—प्रिये ! तच्चरितं तु ब्रह्मायुषापि कालेन वक्तुं न शक्यते। तदवलोक्यतां सकलमनोरथदोहनो भगवान् मदनमोहनः। ][4]

लीला—( सजिज्ञासं ) नाथ ! एष खलु भगवान् किमित्युपविष्ट इव निर्मितो श्री विग्रहो भवति।

विद्या—( तच्छ्रुत्वा प्राचीनं भगवद्भक्तवात्सल्यमनुस्मृत्य कण्टकिततनुः प्रियां प्रत्याह। ) प्रिये ! पुरा किल—

आबाल्याद् भूषयं स्वां सुखमहमनयं वत्सराणामशीतिम्
नाद्योत्थाने समर्थ[5]स्तव शिरसि विभो कौसु[6]मदामदातुम्।
तेनायुर्मे यथेदं न भवति हि वृथा तत्तथा ते विधेयम्
भक्तेनोक्तो[7] यदेवं तदवधि भगवान् भक्तबन्धुर्निविष्टम्॥ ४३॥

---

1. ङ—यावदाधि
2. ङ—प्रतियाते
3. च—क, ख, ग, घ, ङ—माया
4. ग—omits the bracketed portion
5. ख—सम्बन्ध
6. ग—कौस्तुभं
7. ग—नोक्ता

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( तच्छ्रुत्वा विस्मयमाना सती पुनर्भगवतो मुरलीमालोक्य ) नाथ ! गोपिकासु अस्याः प्रभावः कीदृग्विधः श्रूयते ?

विद्याः—प्रिये ! किमुच्यते। भगवदपरिगृहीततया कासांचिद्धैर्य्यमर्य्यादादिकार्य्यचातुर्य्यमवधार्य्य परिगृहीताभिर्यदनुमीयते तत्कश्चित् भवत्या श्रुतमस्ति ?

लीला—नहि नहि। अभिधीयताम्।

विद्या—शृणोतु भवती।

प्रेमार्द्रि[1] पत्यपत्ये गुरुषु गुरुभयं बन्धुरं बन्धुताया-
मासामासीन्मनो यद्व्रजनलिनदृशां नोद्यतं[2] साहसेऽपि।
तस्मादस्माकमन्तः स्फुरति कुलवती कर्मलोलाभिराभिः
कर्णाभ्यर्णं प्रपन्ना मुरहरमुरली काकली[3] काकलीति[4] ॥ ४४ ॥

लीला—सम्भवति तासां तथानुमितिः। तस्यास्तादृशव्याप्तेर्बहुधा[5]नुभूयमानत्वात्।

विद्या—किं च, भगवत्परिगृहीतानां कासांचिदपरासां सन्ततमेव मुरलीध्वनेः श्रवसि स्फुरणाद् वादनकालेऽपि पृथग् ग्रहीतुमशक्यत्वान् लिङ्गपरामर्शपराणामनुमिति[6]रेव प्रत्येकं परिस्फुरति।

ग्रावाणस्तरली भवन्ति यमुनावद्धेव न स्यन्दते[7]
सूयन्ते[8] तरवो मधूनि पशवो ग्रासं न गृह्णन्ति यत्।
मन्ये तन्मुरवैरिणः क्वचिदपि स्पष्टं समुद्दीकृतं[9]
गोपीनामतिगूढमन्मथकलाशंसी स वंशीरवः ॥ ४५ ॥

( इत्युक्त्वा[10] पुनः प्रियां प्रति साशंसम् ) प्रिये !

---

1. ग, च—प्रेमार्द्रं
2. ग—नोधृतं
   च—नोद्यतां
3. च—काहली
4. क, घ, च—नाकलीति
5. ङ—स्ताभिवहुधा
6. च—अनुमति
7. ङ—स्पन्दते
8. क, ख—स्नूयन्ते
9. च—समुद्दीकते
10. ङ—भक्त्या

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

नन्दितव्रजपुरीपुरन्दरं क्रीड़नाय[1] कलिताद्रिकन्दरम्
नन्दनन्दनममन्दसुन्दरं व्येतु वीक्ष्य तव मानसं दरम् ॥ ४६ ॥

इति प्रभोः प्रदक्षिणं समाप्य जगदीशं विलोकनौत्सुक्येन कितद्गत्वा कण्ड्वाश्रमोपकण्ठे विविशतुः । तत्र पुरो गतो विद्यार्णवः प्रियया सह—

अनुजतनुजहीनं यामि जाया जनन्या-
दिभि[2]रपि युवतीभिर्वेष्टितं चेष्टितेन ।
रहितमहितचित्तस्थापि दत्तानुकम्पा[3]
वटविटपिसमीपे किंचिदेकं ददर्श ॥ ४७ ॥

लीला—नाथ ! इह तरुतले शयानं[4] यं युवानं परिवृत्य स्त्रियो रुदन्ति स किल सकलशोकार्णवसुधाकरः क एषः ।

विद्या—प्रिये ! अत्रत्याः कर्णाकर्णिकयन्ति[5] एष खलु काम्पिल्लाधिपते[6]रन्तिकचरो रुचिदत्त[7]-नामकस्य धनिकस्यात्मजो मधुदत्तनामा कोटीश्वरो भगवद्गुण्डिचावलोकनाय क्षेत्रमागत्य कोटिजन्मोपार्जितसुकृतातिरेकपरिपाकवलादासां [8]जामिजायादीनामभाग्यबलेन इदृशीं दशामुपेतो मुमुक्षुतया कण्ड्वाश्रमे प्राणानुत्सृजति ।

लीला—(तच्छ्रुत्वा वज्राहतेव तासां वैकल्यवीक्षणेन समदुःखेव वाष्पपूरितनयना धातारं प्रति)—हं हो !

---

1. ख—क्रिड़िताय
2. च—द्विभगपि
3. क, च—दत्तानुकम्पम्
4. च—शायिनं
5. ग—अत्रत्याकर्ण्य कथयन्ति
6. ग—काम्पिल्याधिपते
7. ख—रुचिरदत्त
8. क—यामि
   ङ—मम

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

सन्त्येते जलराशयः[1] प्रतिदिशं के पर्वताः सर्वतो
नेक्ष्यन्ते सरितो न सन्ति[2] परितो हा हा कियन्तोऽपि वा।
भ्रातर्धीनरनन्यसंश्रयमिलद्वल्लीकुलेऽस्मिन्नगो
कोऽयं निष्करुणस्य हन्त भवतो दम्भोलिकेलिक्रमः॥ ४८॥

( इति विलपन्त्येव निर्गत्य वामे प्रासादमालोक्य) नाथ! कस्य देवस्यायं प्रासादः?

विद्या—( दृष्ट्वा झटिति प्रणम्य ) प्रिये!

स्वर्गान्निर्गलिता भगीरथतपः स्तोमप्रभावाद्भुवम्
यस्योपेत्य जटाटवीपरिसरे सा जाह्नवी निह्नुता।
श्रीभर्त्तृद्रुनधान्यकोपनिचयादायव्यया[3]धीश्वरो
नाम्ना सैष यमेश्वरो गिरिपतिः[4] क्लेशापहः प्रेक्ष्यताम्॥ ४९॥

एवमेव कपालमोचनमपि प्रणम्य तौ भगवत्प्रासादस्य दक्षिणद्वारि प्रविशतः। तत्र च—

द्वास्थो द्वास्थः कोऽपि विद्यार्णवास्रे
द्राक्[5] संघस्य प्रत्यभिज्ञानपूर्वम्।
सम्बोध्यैनं हृष्टरोमाभ्युपेतः
पूर्वप्रीत्या गाढमालिङ्गतिस्म॥ ५०॥

विद्या—( सप्रेमस्मितम् ) सखे! सर्वदैव शक्रादिभिरपि[6] यद्दर्शनं दुःशक्यं त एते भवन्तो[7] यद्द्य एतादृशसंमर्देऽपि सद्य एवोपलब्धास्तत्र करुणाकरकरुणामेव निदानमवैमि।

प्रतिहारी—कः सन्देहः, भगवदनुग्रहं विना कर्णाटदेशवासिनामपि श्रीमतामत्रागमनं कथं निष्पद्येत।

लीला—( अपवार्य ) नाथ! क एते, यान् भवानपि[8] सखित्वेन सम्बोधयति?

विद्या—प्रिये! पूर्वं दर्शनार्थमत्रागतेन मया मित्रत्वपुरस्कारेण पुरस्कृता दासमहापात्रनामानः श्रीजगदीशद्वारपाला एते सुपरिचिता एव।

लीला—तर्हि सुखेन भगवद्दर्शनमस्माकं संपत्स्यत इति प्रतीयते।

---

1. ङ—बलराशयः
2. ग, ङ—लसन्ति
3. क—वायव्य
   च—पत्यव्यया
4. च—नाम्नाऽसौ पु[illegible] गिरिपतिः
5. च—स्रक्
6. ग—शक्रादिभिरपि
   च—नरदेवादिभिरपि
7. च—तत्र ते भगवतो
8. क—भगवानपि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—सखे ! वयमिदानीं कुटुम्बिनः समागताः संमर्दोपद्रवश्च गरीयान् दृश्यते[1] । तदस्माकं सपरिकराणामपि[2] भगवद्दर्शनं सुखेन यथा निर्वहेत्तथा भवद्भिर्विधेयम् ।

प्रतिहारी—सखे, विधेयस्य मम अविधेयं किमालोचयति भवान् ? किं चाद्य भगवन्तं भवन्तं सपरिकरं दर्शयित्वा मम दर्शकत्वं यथार्थं [3]संपादयामीत्यभिमान इत्युक्त्वा[4] लीलावतीं मध्ये कृत्वा दक्षिणसोपान[5]श्रेणीमतिक्रम्य वटाग्रे विविशुः ।

प्रति—प्रियसखि लीलावती !

कल्पान्तोद्धत[6]वेगबृंहितमरुद्व्राचालवीचीभरे
पारावारजलोदरे निपतनाद् भ्राम्यन्मृकण्डोसुतः ।
यस्मिन् पत्रपुटे शयानमचिरादङ्गुष्ठनिष्ठाननम्
बालं किंचिदवाप्य शान्तिमभजत् सोऽयं पुराणो वटः ।। ५१ ।।

इति वटं दर्शयित्वा प्रदक्षिणं कारयित्वा गणपतिमदर्शयत् ।

विद्या—(भगवद्दर्शनविघ्नविघाताय बहुधा गणपतिं प्रणम्य स्तौति)—

निरातङ्कं चन्द्रार्द्धचूडाङ्कशायी
सदा सर्व गीर्वाणनिर्वाणदायी ।
शुभायास्तु शर्वात्मजोऽखर्वगर्व
प्रमाथन् सुपर्वारि निर्वासहेतुः ।। ५२ ।।

विपक्षाटवीवद्धदावाग्निदीक्षम्
महापापीपापापहारैकदक्षम ।
निदिध्यासयुग् योगिनां योगलक्ष्यम्[7]
गणाध्यक्ष्यमीक्षे सदाहं समक्षम् ।। ५३ ।।

किं च—

चलत्कर्णपाली धवित्रं पवित्रं महाशोणरत्नांशु[8]धिक्कारि[9] गात्रम् ।
अघाली[10] महाशालि लावे लवित्रं भजे यत्र कुत्रापि सत्रारिपुत्रम् ।। ५४ ।।

1. ङ—दरिद्र्यते
2. ङ—सगर्भकराणामपि
3. च—संभावयामि
4. च—अभिमानिक युक्त्या
5. ङ—दक्षिणद्वारसोपान
6. च—कल्पान्तोदित
7. च—योगलीला
8. च—महारत्नशोणांशु
9. ङ—धिक्कार
10. च—अघाली

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

कदा हे सुराध्यक्ष दक्षारिसूनो !
गणाधीश हेरम्ब लम्बोदरेति ।
जपंस्त्वद्गुणोद्गारवन्दीकृतात्मा
कृतार्थीकृतं जन्म संपादयामि ॥ ५५ ॥

अपरं च—

वराभीति पाशाङ्कुशान्बाहुदण्डै-
र्दधत्फुल्लपङ्केरुहान्तर्निविष्टः ।
नखाकोटिरक्तच्छविः शोणनासा[1]
द्विदन्तो[2] मदन्तर्नितान्तं चकास्तु ॥ ५६ ॥

अन्यच्च—

बृहद्बृंहितैः पूरितक्षोणिखण्डो
मदामोदलुब्धालिभि[3]र्व्याप्तगण्डः ।
सदा विघ्नविध्वंसनेऽति प्रचण्डो
मम श्रेयसे जायतां वक्रतुण्डः ॥ ५७ ॥

किं च—

अखण्डावनीमण्डलामोदकीर्त्ते
महारक्तमाल्याम्बरोद्भासि मूर्त्ते[4] ।
कृतानेकभक्तावली चित्तवृत्ते
पदं धेहि भो मामके चित्तगर्त्ते ॥ ५८ ॥

असारात्मसंसारघोरान्धकूपे
पतद्भृत्यमुद्धर्त्तुमिच्छुर्य एकः ।
करे पाशमालम्बते जागरूकः
स भूयान् ममालम्बनं लम्बकुक्षिः[5] ॥ ५९ ॥

य इदं पठति प्रेम्णा गणनाथाष्टकं बुधः ।
न स विघ्नमवाप्नोति जगदीशावलोकने ॥ ६० ॥

---

1. क, च—नासा
2. च—द्विदन्तो
3. च—द्विभिः
4. ख—कीर्त्ते
5. क—लम्बकुक्षिः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

(ततः प्रदक्षिणक्रमेण वटेश्वरमालोक्य) भगवन् !

चूडाचञ्चच्चारुचन्द्रार्द्धचूलो
नागोत्तंसाश्च कर्णावतंसः ।
लीलां बिभ्रत्ताण्डवाडम्बरोत्थां
मामापन्नं पातु देवो वटेशः ॥ ६१ ॥

[ ( पुनर्वटमङ्गलामालोक्य ) देवि !

नवजलधरधाति कान्तिकान्ताङ्गयष्टे
मकरुणनयनान्तः प्लुष्टदारिद्र्यसृष्टे ।
अभितविनतिपूर्वं[1] सन्ततं हन्त याचे
विरचय मम कृत्ये मङ्गले ! मङ्गलानि ॥ ६२ ॥ ][2]

( तदनु क्षेत्रपालं प्रणम्य स्तौति )—

ज्वलत्कपालपावकं शिरःस्थचन्द्रशावकम्
श्मशानभूमिमन्दिरं स्वपद्विराजदिन्दिरम्[3] ।
अशेषवर्गदायकं[4] विकुण्ठनाथसायकम्
जगत्त्रयी[5]विधायकं विनायकैकनायकम् ॥ ६३ ॥

परात्परं निरञ्जनं रतीशगर्वगञ्जनम्[6]
विदारितोग्रसिन्धुरं गजादिनाति[7]बन्धुरम् ।
मनोरमा हि कुण्डलं विनाशितापमण्डलम्[8]
निरस्तदुष्ट[9]दूषणं त्रिशूलशूलभीषणम् ॥ ६४ ॥

स्वपादसन्नताम्बरं[10] चलज्जटान्तचामरम्
गिरीन्द्रनन्दिनीधवं[11] दरिद्रकोटिबान्धवम् ।
सुमूर्त्तिधारिणं वरं कृपाकरं दिगम्बरम्
श्मशानशावगन्धिनं जगद्धितानुबन्धनम् ॥ ६५ ॥

---

1. ङ—अभि तव नति पूर्वं
2. क—Ms. omits the bracketed portion.
3. ग—विन्दिरम
4. क—गर्वदायकं
5. ङ—जगत्त्रपा
6. च— वञ्जनं
7. घ, च—गजाजिनाति
   ङ—गजार्जनाति
8. ङ—जनाशिताप मण्डलम
9. च—शिष्ट
10. क, घ—सन्नतामरं
11. ङ—ध्रं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

निजार्द्धसं लसच्छविं[1] गरिष्ठतेजसं[2] शिवम्
करोटिकोटिमालिनं विभूतिभूतिशालिनम् ।
सरोजगात्रवीक्षणं सुताण्डवे विचक्षणम्
सुरेन्द्र[3]संचितादरं भजे सदैव शङ्करम् ॥ ६६ ॥

( इति नत्वा ततो निरीय[4] अनन्तपुरुषोत्तमपुरो विज्ञापयति ) देव !

शेषे शेषे यदिह धरणीभारभूतानशेषान्
हत्वा देव प्रतिभटभटानुद्भटान् दोर्विलासैः ।
निद्रामुद्राकुलितहृदयो हन्त नैश्चिन्त्य योगात्
वद्विज्ञाप्यं (मे) भवति भवते मत्कृते जागृहीति ॥ ६७ ॥

लीला—( तदनु तत्र प्रासादान्निर्गत्य श्रुत्वा प्रियं प्रति ) महाभाग !

चातुर्विध्योपपन्नैर्घनशुषिरततातै[5] नद्धभेदाद्विभिन्नै[6]
[7]र्वाद्यैर्हृद्यानवद्यैस्तरलितहृदया प्रष्टुमिच्छामि किंचित् ।
वाधिर्यं कर्णदेशे दिशि-विदिशि दिशद्रोदसी व्यश्नुवानम्
शब्दाद्वैतं किमेतत्सुभग भगवतो मन्दिरे तत्र विद्मः ॥ ६८ ॥

प्रति—(श्रुत्वा) सुभगे लीलावती !

टं टं टं टं टटन्त्यः[8] सुतनु[9] तव मुदे हन्त घण्टाघटन्ताम्
दिक्तान् दिकतान्[10] वितन्वन् रचयतु[11] कुशलं सत्वदङ्गे मृदङ्गः
धुं धुं धुं धुं ध्वनन्ती[12] हरतु तव हरेर्दुन्दुभिर्द्वन्द्वभीतिं
भुं भुं भुं भुं भणन्तो विदधतु भविकान्यम्ब वः कम्बवोऽपि ॥ ६९ ॥

विद्या—प्रिये ! किं न शृणोषि ?

---

1. ख—निजार्थसन्निसच्छविं
2. च—चेतसं
3. ङ—पुरेन्द्र
4. ङ—निरीक्ष्य
5. ग—शुषिरततो
6. ङ—तानर्द्ध भेदावभिन्नैः
7. ङ—गद्यै
8. च—ठं ठं ठं ठं ठठन्त्यः
9. क, ख—सतनु
10. च—धिकता धिकतान्
11. ङ—रचयति
12. क, घ—ध्वनन्ति

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

इहो च्छलति[1] निःस्वनः पटहपाटवोद्घाटितैः
गिरावघटनै[2]पुनर्मधुरिकादिभिर्बृंहितः ।
इतः कलयदैवतै[3]र्विरचितोऽन्तरीक्षोदरे
न कीदृगुपलक्ष्यते मुरजमर्द्दलानां रवः[4] ॥ ७० ॥

ततः प्रतिहारी वेत्रप्रहारमात्रजर्जरितान् संमर्द्दकारिणो यात्रिकानुत्सार्य जगन्मोहनमन्दिरे तौ प्रवेश्य गरुत्मद्दर्शनानन्तरं तदग्रे स्थापयामास ।

इति श्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजिकृतौ
गङ्गवंशानुचरिते चम्पुकाव्ये
द्वितीयः परिच्छेदः ।

---

1. क, च—इहो च्छलित
2. ग, ङ—महागह विशृङ्खलैः
च—विरावघटनैः
3. च—कलयतैबतै
4. ख, ग, ङ, च—डम्बरः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# तृतीयः परिच्छेदः

अथ विद्यार्णवोऽपि भगवन्मुखारविन्दविलोकनोत्फुल्लविलोचनः पुलकिताङ्गयष्टिर्जयेत्यसकृदुच्चार्य[1] साष्टाङ्गं प्रणिपत्योत्थाय शिरस्यञ्जलिं बद्ध्वा वाष्पभरगद्गदस्वरं स्तौति। एष खलु भगवान् दारुब्रह्मरूपी देवाधिदेवः।

जयति कृपानिधि- रतुलसुखाम्बुधि[2]-
रखिलहृदयनिवासी।
दुःखविमोचन दक्षविलोचन
पङ्कजयुगविकाशी[3] ॥
सहज महोज्ज्वल विदलित कज्ज्वल-
मञ्जुमुख[4] हिमधामा[5]।
विपुलभुजान्तर- लम्बि निरन्तर
निस्तल तुलसी दामा[6] ॥
[ अर्गलसुन्दर विघटित मन्दर[7]
विततभुजयुगशाली।
रुचिर कटीतट पीत पटोत्कट-
रुचि निवह वनमाली ॥
विद्रुमविरचित यमुनाजलगत
तरणी[8] निभाधरशोभी।
गुण गण सागर वदन सुधाकर
मुनि जन मानस लोभी ॥][9]
क्षितिसुर[10] पामर दनुज नृपामर[11]
हृदयसरोजविनोदी।

---

1. च—उत्थाय
2. च—सुधाम्बुधि
3. क—बिलासी
4. घ, ङ, च—मञ्जुमुख
5. ङ—धाम
6. ङ, च—दाम
7. ङ—मन्दिर
8. ख, ङ—तरुणी
9. क—omits the bracketed verses
10. ग—पुर
11. ङ—कृपामर

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

त्रिजगच्छरण श्रितनिजचरण
व्यथितविपदपनोदी ॥

शुक नारद मुख मुनि मानस सुख
संपद मग पलाशी।
हरि नारायण नाम परायण
विविधदुरितविनाशी ॥

अकलितभूमनि परमव्योमनि
केलिकलारुचिधारी।
सच्चिन्सुखमय तनुकलितोदय
यतिपतिमानसचारी ॥

इह नील क्षिति भृति कृतसंस्थिति-
रखिल जगदनपायी।
वितत विपक्षे मयि हत रक्षे[1]
भवतु शुभ[2]सुखदायी ॥

( पुन र्विभोः श्रीमूर्त्तिं विभाव्य )

किं वा कालाभ्रखण्डः किमिववनकरी निर्गतो नीलशैलात्
किं संरूढ़[3]स्तमालस्तरुरयमथवा यामुनो वारिपूरः
इत्थं सन्देहसन्दीपनपटुदभूदिन्दिरानन्दकन्दो
जाये[4] जन्मान्तरे मत्कृतसुकृतवलाल्लोचनाध्वाध्वनीनः ॥ १ ॥

( पुनर्भगवद्वदनकालिमनिवद्धहृदयः प्रियां प्रति दर्शयन् स्तौति )—

प्रत्यग्राम्भोद भिन्नाञ्जनरवितनयानीलपाथोजमाला
कस्तुरीभृङ्गभङ्गी[5] सुरपतिमणिरुग्गर्वसर्वस्व चौरः[6]।

1. ग—दृतरक्षे
2. ङ—गुरु
3. ग—वारूढ़ ङ—सञ्चारी
4. ग, ङ—जातो
5. क, च—भङ्गी
6. ङ—रोचि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

कारागारे[1] निशान्तर्यतिभिरिव ततो भक्तिरज्ज्वावनद्धः
कान्ते किं ते दृगन्ते[2] न पतति[3] भगवान् श्यामलः सुन्दराश्रीः ॥ २ ॥

( पुनर्दक्षिणतो बलदेवमालोक्य ; पूर्ववत् प्रणम्योत्थाय साशंसम् )

किं गङ्गावारिपूरः किमु गिरिशिखरिः[4] किं शरद्वारिवाहः
किं वा क्षीरोदवीचिः स्फुरति किमथवा शारदः शीतभानुः ।
इत्थं संशय्य पर्याकुलमतिभिरनातङ्कमाशंक्यमान-
स्तालोङ्को निर्विशङ्कं मम दृशि विशतात् कुन्दसन्दोहमूर्त्तिः ॥ ३ ॥

प्रिये ! न किं बलदेवरूपधारी त्रिभुवनपुण्यपुञ्जः पुरः[5] परिस्फुरति ? तथा हि—

सौधश्वेतातपत्रस्फुटकुमुदघटामुग्धदुग्धाब्धिवीचि-
गङ्गानङ्गाङ्गदाही स्फटिकगिरितटी काशसंकाशकायः ।
किं वा शब्दैरनेकैरसितगिरितटादुत्थितः कोऽपि सिंहः
याले कारुण्यसिन्धुः कलय विजयते[6] रेवतीप्राणबन्धुः ॥ ४ ॥

( मध्ये सुभद्रामालोक्य कृतार्थीकृतेक्षणो विद्यार्णवः प्रियां प्रति ) प्रिये ! पश्य पश्य ,

स्वर्णस्वर्णप्रसूनप्रकरनवनिशापङ्कगोरोचनाम्भः
प्रोद्यद्विद्युन्नवार्कद्युतिचयकुनटी [7]जागुड़श्रीलमूर्त्तिः ।
किं कारुण्यं स्रवन्ति विकटकटीतटस्फारपीताम्बरश्री—
रेषा भद्रे सुभद्रा जनयति जगदानन्दसन्दोहमन्तः ॥ ५ ॥

(तदनु लीलावती जगदीशमुखावलोकनविकाशिनयना[8] तथैव प्रणिपत्योत्थाय कृताञ्जलिर्भूत्वा)—

---

1. क, घ, ङ—कारकारे
2. क, घ—दृगन्तः
3. क घ, च—निपतति
4. ग, घ, ङ, च—गिरिश गिरि
5. च—पुनः
6. ङ—कलयति जयते
7. च—जागृद
8. ङ—विकासितनयना

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

भगवन् कृपालो ।

प्रणमामि भवन्तमनन्तपदम् । पदपल्लव[1]पावित सिन्धुभुवम् ॥
भुवनाहत मर्दित दैत्यमदम् । मदनायुत-सुन्दर-देह-रुचिम् ॥
रुचिराम्बर डम्बरमब्जकरम् । करजक्षत [2]विक्षित दैत्यपतिम् ॥
पतितव्रजतारण रूढ़रमम् । रसयाश्रित पार्श्वमशेषचरम् ॥
चरणाश्रित[3] मज्जनकल्पतरुम् । तरुणारुणाकोटिविभाद्धरम् ॥
धरणीधरभावविकाशिवनम् । वलवैरिमुखामरतापहरम् ॥
हरवन्दितमाहृत सर्वकलम्[4] । कलकण्ठजयच्छविमब्जगलम् ॥
गलदश्रुजलार्त्तिवितीर्ण[5] शिवम् । शिवया परिसेवित पादयुगम् ॥
युगवाहुमशेषसुखौघमयम् । मयजापतिपातनकेलिपरम् ॥
परमार्थपदार्थमुदारतरम् । तरसार्द्दित दुष्टबलिष्ठगणम् ॥
गणनाथनिवेदित नित्यबलिम् । बलिदानवबद्ध विनोदकलिम्[6] ॥
कलिदोष विषादन नामगदम् । गदया परिशोभित चारुभुजम् ॥
भुजगाधिप कल्पित तल्पशयम् । शयकान्तिविनिन्दित[7] कोकनदम् ॥
नदनाथ[8] सुतावदनभ्रमरम् । मरणप्रसवादि दशाशमकम् ॥
मकराकृतिकुण्डलमञ्जुमुखम् । मुखरीकृत दिङ्मुख सारसनम्[9] ॥
सनकादिनुतेन्द्रमणीसुभगम् । भगवन्तमशेषगुणाम्बुनिधिम् ॥

( पुनर्विद्यार्णवमुद्दिश्य )—

कालिन्दीजलशोभि पङ्कजकृतातङ्कप्रसन्नेणक्षो
निर्भिन्नाञ्जनशैलगैरिकतटी[10] सम्वादि[11] विम्बाधरः ।
मेघाधोगतविद्युदुद्यम[12] वलत्पीताम्बराडम्बरो
मोक्षैकप्रतिभूः पुरः प्रभुरयं किं न प्रिये प्रेक्ष्यते ॥ ॥

---

1. च—भावित
2. च—करजक्षतिवीक्षित
3. ङ—स्वजन
4. ग—माहृत सर्वबलम्
5. क—विवर्ण
6. ख—बन्धविनोदकरम्
7. च—शयनान्तविनिद्रित
8. क—नन्दनाथ, च—नगनाथ
9. ङ—सारसजं
10. ग—गौरिका तटी
11. क—संवाद
12. ग—विद्युदुज्ज्वल

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

(पुनर्दक्षिणतो निरीक्ष्य) नाथ ! इतो विजयते रेवतीरमणः । स च—

शुभ्रादभ्राभ्रमाला परिसरवलयीभूत निष्कम्पशम्पा[1]
कम्पासंपादकश्रीमुखविधुपरिधिस्पर्द्धि पत्रोर्णरेखः[2] ।
तत्तादृक् प्रेष्ठनेत्रोत्सवविधिविहित श्रीमुखश्रीसमक्षं
प्रेक्षाहंपूर्वकात्युत्सुकमतिमिलितब्रह्मशर्वादिलेखः[3] ॥ ७ ॥

( सानन्दम् ) किं च—

कुन्दकम्बुकरिराट् कुमुदालीगर्वसर्वहरकान्तिकदम्बः ।
शैवशैलगतधातवरेखा[4]बन्ध[5]सुन्दरतराधरविम्बः ॥ ८ ॥
रेवतीनयनचित्तचकोरी स्फारशारदसुधाकरखेलः ।
स्फाटिकस्थलमिलद्रविपुत्री चारुवीचिचयचञ्चुर चेलः ॥ ९ ॥

सिंहसंहनन सुन्दरमूर्त्तिः कल्पिताखिलमनोरथमूर्त्तिः ।
कान्ति[6]वारिचय देवधुनि ते किं हली न दुरितानि धुनीते ॥ १० ॥

( मध्ये सुभद्रामालोक्य प्रणम्योत्थाय ) नाथ !

दाहोत्तीर्णसुवर्णवर्णरुचिरामुल्लासिपीताम्बरामं
देवीं पङ्कजलोचनामुभयतो यौ रामरामानुजौ ।
तावेतौ कनकाचलोत्कटतटी पार्श्वद्वयोद्भासिनीं
गङ्गा भानुसुताम्बुडम्बरमहाकान्तिच्छटामूर्च्छितः ॥ ११ ॥

विद्या—( प्रमोदभरभरितमानसः प्रियां प्रति ) प्रिये !

किं वानन्द स्रवन्ती प्रवहति पुरतः श्रीशवेशापदेशात्[7]
किं वा पीयूष पूरः प्रसरति परितो रौहिणेयच्छलेन ।
किं वा लावण्यधाटी धरणिमधिगता भाति भद्राभिधाना
मग्नेत्थं[8] चित्तवृत्तिर्मम विधुवदने संशयातङ्कपङ्के ॥ १२ ॥

---

1. च—निष्याखगशाखा
2. क—पत्रे र्णिरेखः
3. ग—ब्रह्मशक्रादिलेखः
4. च—धातुवरेण्या
5. ख—बन्धु
6. च—कान्त
7. क, घ—श्रीशदेशापदेशात्
   च—श्रीददेशापदेशात्
8. क—मग्नेत्वं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रति—सखे ! अद्य किल भगवतो नेत्रोत्सव इति महाविमर्दः सम्भवति । ततो झटिति दर्शनं समाप्य प्रदक्षिणाय प्रचलिष्यामः ।

विद्या—( सोल्लासम् )

सर्वात्मा भगवानिति प्रतिमुहुः सिद्धान्तसम्बादिभिः
यद्यत्प्रोक्तमशेषखण्डनपरैस्तत्तत्तथा नान्यथा ।
यन्नीलाचलचारुकन्दरतटींसिंहासनाध्यासिन-
स्तस्यायं नयनोत्सवः समजनि त्रैलोक्यनेत्रोत्सवः ॥ १३ ॥

इत्युक्त्वा पुनः प्रणम्योत्थाय प्रतिहारिणा समं दक्षिणद्वारेण निर्गत्य प्रदक्षिणाय प्रचक्रमिरे[1] ।

प्रति—सखे ! अयं किल विद्वन्मण्डलीमण्डितो मुक्तिमण्डपः, प्रणम्यताम् । एष खलु—

स्निग्धस्वारान्मणीभिः[2] कृतबहुविपुलारम्भणस्तम्भशाली
धृष्टामृष्टानुसृष्टैर्मरकतशकलैर्वाढनिर्व्यूढपीठः[3] ।
उध्दृ' वैडुर्य्यवर्य्यैविरचितपटलः साधुसोपानवीथिः
भ्राजिष्णुर्जिष्णुमुख्यः त्रिदशपरिवृतैः[4] सन्ततं चिन्त्यतेऽन्तः ।।१४ ॥

अत्र हि—

वात्स्याः[5] केचन पण्डिताः कतिपये कौत्साः[6] परे काश्यपाः
भारद्वाजकुलेन्दवः कतिपरे[7] हारीतवंशाङ्कुराः ।
आत्रेयान्वयकैरवामृतरुचः केचित्परे वह्वृचाः
विप्रेन्द्राः दधति स्थितिं जपतपो निष्ठा[8]गरिष्ठागुणैः ॥ १५ ॥

---

1. क—Ms. reads the following lines in the place of "प्रदक्षिणाय प्रचक्रमिरे"—
दक्षिणगृहान्तर्द्वातुविग्रहधारिणं मारिचमारिणं
विलोक्य, एष खलु खरदूंषणघाति रघुनन्दनः
ग—Ms. reads here the slokas from 27th to 34th.
च—Ms. reads here "मुक्तिमण्डपसमीपं प्राप्तः"
2. क—स्निग्धस्वारामणीभिः
3. ग, ङ—कल्पितानल्पपीठः
4. घ, ङ, च—परिवृढैः
5. ङ—कौत्साः
6. क—कतिपयो कौत्साः
ङ—कतिपये वात्साः
7. ग, ङ—कतिपये
8. ग, ङ—वरिष्ठा

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—तेभ्यः साष्टाङ्गं प्रणिपत्य तत्पश्चिमे नरसिंहनाथमालोक्य कृताञ्जलिराशास्ते[1] ।

शङ्खारि[2] पङ्कजगदा चञ्चच्चारु चतुर्भुजः
हरिवक्त्रो[3] हरितनु[4]स्तनोतु तव[5] मङ्गलम् ॥ १६ ॥

(प्रियां प्रति)—सखि लीलावती ! दैत्येन्द्रवक्षस्थल विदारणदारुणोमहानुभावः किं ते न विदितः ? एप किल—

आशाकाशावगाहि प्रसृमरमदनस्तम्भमध्योज्जिहानः
ध्यानेन ध्रंसमानक्षितिधरशकलैः जर्जराङ्गीकृताया ।
मन्ये यस्यारिवक्षःस्थलदलन[6]महारम्भगम्भीरमूर्त्ते-
र्नैवाद्यापि क्षमायाः स्मृतिसमयकृतः शान्तिमायाति कम्पः ॥ १७ ॥

(इति स्तुत्वा तदनु विमलाप्रासादे प्रविश्य विमलां प्रति)—

नमस्ते नमस्ते भवानी प्रसीद
स्फुटं मामके चित्तगर्भे[7] निषीद ।
कृपापाङ्गभङ्ग्याधुना मां पुनीहि
क्षणादेव तापाटवीं[8] मे लूनीहि ॥ १८ ॥

मिलत्युच्चकै[9]स्तावकीनप्रसादे पतेत् कोऽनुचिन्ता परितो विषादे ।
तवाङ्घ्रिद्वयं चेतसा ये स्मरन्ति क्षणात्ते विपद्वारिधिं विस्मरन्ति ॥ १९ ॥

देवि !

त्वां कस्मात् प्रसमीक्ष्यमानविधुरां देवे स्वयं धूर्जटौ
धृत्वा पाणियुगेन ते पदयुगं चाटुं हठात् कुर्वति ।
तत्र त्वय्यपि तत्करौ करयुगेनोत्सारयन्त्यां रुषा
सा पट्कोकनदी चिरं गिरिसुते भूयात्मम श्रेयसे ॥ २० ॥

---

1. ङ—Ms. reads the following after आशास्ते ।
नानाशाखोपगूढागमनिगमपथानन्तकान्तारवीथी-
सञ्चारी चारुचारी चलितरिपुघटा चित्तशारङ्गशावः ।
पायान्निध्यानधाटीध्वनितदशदिगाभ्यन्तरो मामपाया-
द्भग्नांहः संघमत्त-द्विपवलदलनोद्दामसिंहो नृसिंहः
प्रियां प्रति—
2. ङ—शृङ्गारि
3. क—भक्तो
4. च—नरवपु
5 ङ—मम
6. क—दमन
7. ग, घ, ङ, च—गर्त्ते
8. ग—पाशाटवीं
9. क—मिलत्युच्चकैः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

( तदनु कियद्दूरं गत्वा, प्रिये, सरस्वतीति नामान्तरेण व्यपदिश्यमाना सेयं भुवनेश्वरी प्रणम्यतामित्युक्त्वा अञ्जलिं बद्ध्वा )—

कदाचित् किं त्यक्ता तव चरणसक्ता मतिरियं
कृता धृतालस्या न तव वरिवस्या किमनिशम्।
कृत्वोऽन्यः किं दोषो जननि तव रोपोपचितये[1],
यतो दीनानाथे मयि भवसि हीना करुणया ॥ २१ ॥

प्रति—सखे विद्यार्णव ! अत्र निलमाधवः प्रतिवसति प्रणम्यताम्।

विद्या—सखे ! महामहिमशाली नीलमाधवो मया दृष्टचर एवेति सपरिकरं प्रणमति।

प्रति—(सर्वानुद्दिश्य) महाभागाः !

एष क्षेत्राधिदेव[2] कृपणजनकृपासिन्धुरापन्ति धारा
वाराशेः[3] कुम्भजन्मापरिजनपटली कामना[4] कामधेनुः।
इन्द्रद्युम्नेन राज्ञा कृतसुकृतचयैः स्थापितः सौधमध्ये
नीलः प्रख्यातलीलः प्रथयतु कुशलं साधवो माधवो वः॥ २२ ॥

तदनन्तरं कालिकापुरं प्रविश्य कृतप्रणामो विद्यार्णवः—( प्रियां प्रति )

प्रिये ! एषा भगवतः पीठकालिका, प्रणम्यताम्। किं च—

यया पूर्वं पूर्वामरहननदक्षैकपरया
[5]परं चण्डो मुण्डः स च समरभूमौ विदलितः।
यया हृष्टपुष्टस्तदनु स च सृष्टः[6] सुरगणो
महामाया सेयं घनरुचिरकाया निवसति॥ २३ ॥

---

1. ग—रोषापचितये
2. क, ख, ग, घ – क्षेत्रादिदेवः
3. क— बारतशः।
4. ङ— वामना
5. ग—रयाच्चण्डो
   ङ—रयाचण्डो
6. ङ—पृष्टः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

(तदनु भगवत्याः लक्ष्मीदेव्याः प्रसादे प्रविश्य दूरादालोक्य प्रणम्योत्थाय सिरस्यञ्जलिं बद्धा) प्रिये !

अमन्दानन्दमिलदिन्दिरामन्दिरायमाण[1]-
विकचारविन्दसन्दोहमध्यभूमदुभ्रमरी।
विपुलतरमुरहरवक्षःस्थलस्थायुकसन्तत-
विकसदम्लानकुसुमसुषमवनमालासहचरी ॥ २४ ॥

या किल—

अपूर्वं लावण्यं वपुषि कलयन्ती मुखतटे
प्रसन्ना कल्याणी स्मितमधुरमूर्त्तिर्नव न वा।
अहो सेयं देवी मदनवनिता[2] कोटिजयिनी
मनो मे सोल्लासं द्रवयति च संमोहयति च[3] ॥ २५ ॥

किं च प्रिये !

यद्वीक्ष्य क्षणमुन्मिषन्ति[4] द्विगुणेऽप्यौदार्यशौर्यादयो-
लीयन्ते चिरसंचिता गुणगणा[5] यस्या दृगन्तादृते।
या विष्णोर्जगदन्तरात्तवसतेर्वक्षस्थलस्थायिनी
तां वृन्दारकवृन्दवन्दितपदद्वन्द्वां श्रियं संश्रये ॥ २६ ॥

( ततः सौरसौधसन्निधिं गत्वा प्रणम्य ) देव !

उपात्ते त्वन्नाम्नि[6] क्षयितभवदाम्नि प्रतिपदं
भवत्पादारूढे मम विषयमूढेऽपि मनसि।
तव ध्याते रूपे शुभसलिलकूपेऽपि सततं
न जाने केनेयं[7] प्रसरति विपत्तिः प्रतिमुहुः ॥ २७ ॥

1. ग—अमन्दानन्दमिलिदिन्दीवरवृन्दमदिरायमाण
घ—अमन्दामन्दानिलदिन्दिरामन्दिरायमाण
ङ—अमन्दानन्दमिलदिन्दीवरवृन्दमन्दिरायमा
2. क—वलिता
3. ङ—रम्यं मोहयति च
4. ख, ग—मुन्मिमन्ति
5. ङ—अपि गुणा
6. क—उपातत्ते ते नाम्नि
घ—उपात्ते ते नाम्नि
च—उपान्ते ते नाम्नि
7. क—न जाले के नेयं
ख—न जाने के नोयं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

( तदनु प्रासादं प्रदक्षिणी कुर्वन् ) पुनर्दक्षिणद्वारदक्षिणगृहे धातुविग्रहधारिणं मारीचमारिणं विलोक्य रामभक्तो विद्यार्णवः प्रणम्य सविशेषं स्तौति। एष खलु खरदूषणघाती[1] रघुनन्दनः—

कौशल्याचित्तवित्तापहरणकुशलः कौशिकानन्ददायी
सीतानेत्रारविन्दद्वितीय[2] दिनमणिर्लोकशोकापहर्त्ता।
भर्त्ता भूमेर्विहर्त्ता फलित[3]शुभदशे दण्डकारण्यदेशे
कुर्य्यादैश्वर्य्यमार्य्यो दशरथतनुजः सानुजः सन्ततं नः॥ २८॥

दृप्यद्दोर्दण्डलीलादलितपुरहरोद्दण्डकोदण्डकण्डो
ब्रह्माण्डैकाधिकारी भवभयदमनः खण्डिताखण्डलारिः[4]।
नव्याम्भोवाहभव्याकृतिजनितजनानन्दसन्दोहकन्दो
रामः पायादपायाघहरिण[5]हरिर्दत्तलङ्कैकशङ्कः॥ २९॥

विश्वामित्रस्य सत्रे प्रकटितकपटानुद्भटाभान्निशाटान्[6]
हत्वा सत्वातिरेक[7]स्फुटमहिमभरो निर्जरैः स्तूयमानः।
दद्याद्भद्रं दरिद्रावलिकलितदयो जानकीजीवबन्धुः
कश्चित् प्रोद्दामधामा भवजलधितरी रामनामा चिरं वः[8]॥ ३०॥

युद्धश्रद्धातिमाद्यद्दशमुखनिधनानन्दिदिक्कान्तनिर्यत्
स्वानन्दाश्रुप्रवाहस्तिमितदशदिशोत्कन्दल[9]त्कीर्त्तिवल्लिः।
अर्थिप्रत्यर्थिदानप्रथितपृथुयशाः स्फीतपीताम्बरश्रीः
पायान्नः पार्थिवेन्द्रो भृगुकुलसवितुर्गर्वनिर्वाणहेतुः॥ ३१॥

ज्याटङ्कारप्रसारक्षतरजनीचरानीकनिष्कण्टकोद्यत्
स्वाराज्यप्राज्यभोज्यत्रिदशपतिशचीगीतदो कीर्त्तिवीचिः।
किंचिच्चञ्चत्कटाक्षक्षतनिजजनतातापपापाटवी कः
कुर्य्यान्नो वीरचर्य्याचणचतुरभुजो रामभद्रोऽतिभद्रम्॥ ३२॥

---

1. क—खलु खल घरदूषणघाती
   ङ—खलु दूषणघाती
2. घ, ङ—द्वितय
3. ङ—गलित
4. क—खण्डकारिः
5. च—हरण
6. ङ—निशाटीन्
7. ङ—सर्वातिरेक
8. घ, ङ—नः
9. च—नन्दन

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

संग्रामारामसीमोत्थितनिखिलनिजारातिदुर्वंशवीथि-
मूलच्छेदप्रसङ्गे प्रवलतरमहावर्त्तसंवर्त्तवातः[1] ।
मन्दप्रस्पन्दमानानिलतरलदलव्याकुलेन्दीवराक्षो
रक्षोविक्षोभकारी रचयतु कुशलं सन्ततं रावणारिः ॥ ३२ ॥

तैस्तैराचार्यवर्य्यैरनवगतगुणग्रामसञ्चारसीमा
मोहध्वान्ताब्जकान्तः कलिकलुषवनच्छेददीक्षाकुठारः ।
भक्तव्यासक्तचित्तोद्यु मणि[2]कुलमणिर्मामकीनं पुरस्तात्
कन्दर्पोत्सर्पिदर्पाहरणचणवपुर्वाञ्छितं[3] चर्करीतु ॥ ३३ ॥

सीतानीताब्जमालाललितवृहदुरो वीक्षणक्षीणतत्सं-
प्राप्त्याशाकाशदेशाहितवदनधराधीशधिक्कारहेतुः ।
खर्वान्योर्वीधरेन्द्रावृंदविहितमहासेतुनिस्तीर्णवार्द्धि[4]
र्द्धीरोदात्तः प्रशान्तो रघुकुलतरणीः शन्तु नः सन्तनोतु ॥ ३४ ॥

( इति दर्शनानन्तरं प्रासादं परिक्रम्य सिंहद्वारसोपान[5]धोरणीप्रसारितां[6]प्रभोर्निर्माल्य[7]पूपपरंपरामवधार्य्य ) प्रिये ! पश्य, पश्य, निर्माल्यपूपपरिपाटीम् ।

लीला—(दृष्ट्वा, विस्मितेव प्रतिहारीं[8] प्रति ) एतानि किं नामधेयानि ।

प्रति—महाभागे ! एतान्येव देशे देशे पृथक् पृथक् नामान्तरेण प्रत्येकं व्यपदिश्यन्ते । तथापि अस्मद्देशे व्यवहारमूलानि नामधेयान्यभिधीयन्ते ।

झिल्झिझिल्झिमि[9]काकरासरपुली[10] पेड़ापुलीशष्कुली
मण्डापर्पटिदाड़िमाघृतपुलीखण्डेण्डुरीनाड़यः ।
कोराकान्तिरसावलीखयिखजा कर्पूरकेलीवड़ा
भान्त्येते क्षीरिषारिषा[11] प्रभृतयो निर्माल्यपूपाः प्रभोः ॥ ३५ ॥

---

1. ङ—वन्तिसंपत्ति वादः
2. क—द्विमणि
3. ङ—र्लाञ्छितं
4. क—निस्तीर्णवार्द्दि
   ग—निस्तीर्णदर्घि
   घ—निस्तीर्णं वार्धं
5. ग—प्रासाद
6. क—प्रसारिणं
7. च—Ms. reads माल्य only
8. क, घ, ङ—प्रतीहारं
9. क, घ, च—झिल्लिकाझिमि ।
10. क—रसपुली
11. क, घ, ङ—खिरिसारिसा

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( वीक्ष्य ) नाथ ! किमाश्चर्यम्—

शूद्रैर्दत्तं भुञ्जते तद् द्विजेन्द्रो[1]
यत् संस्पृष्टं पायसं वायसेन ।
शिष्टाशिष्टस्पर्शवार्त्तासु दूरा[2]-
दप्युच्छिष्टे[3] नास्ति कश्चिद् विमर्शः ॥ ३६ ॥

विद्या—प्रिये ! दोषं दोषं, निर्माल्यमाहात्म्यं किं न श्रुतवत्यसि ?

कुक्कुरस्य मुखाद्भ्रष्टं यदन्नं पावनं महत् ।
इति शब्दायते यस्मिन् न्याय-सिद्धान्त-डिण्डिमः ॥ ३७ ॥

इति विमृशन्तौ[4]तौ दम्पती नानाविधपूपोपेतं दिव्यं निर्माल्यं[6]ततो गृहीत्वा प्रतिहारीं कोकिलवैकुण्ठाख्ये उपवने भोजयामास ।

लीला—( तादृशपदार्थोपभोगनिर्वृत्ता[7]सती भर्त्तारं भणति ) नाथ ! स्वर्गापवर्गयोर्विवादसीमेयं क्षेत्रस्थली ।

विद्या—सखि ! कः संदेहः, तथाहि-

अत्रेदृक्शतसंख्यसौध[8]शिखराण्यासाद्य[9] नानारसैः
के न स्रग्वनितानुलेपनजुषः खेलन्ति खेलालसाः ।
के वा लोचनगोचरे मुरहरं लब्ध्वा तदुच्छेषणं[10]
जग्ध्वा जाग्रति नाग्रतोऽसुविगमे[11] मोक्षाय[12] दीक्षाभृतः ॥ ३८ ॥

लीला—( परितो विलोक्य ) महाभाग ! नानाविधदेशभाषाकरम्बितनानादिगन्तवास्तव्यजनताविमर्दोर्दितेऽत्र क्षेत्रे अस्माभिः कुत्र वासो विधेयः ।

---

1. घ, ङ—द्विजेन्द्रा
2. ङ—दूरे
3. ङ—यद्युच्छिष्टे
4. घ, ङ—जोषं जोषं
   च—जोषं
5. च—विसृज्यैतौ
6. ङ, च—निर्माल्यान्नं
7. ङ—निर्वृत्ता
8. च—धौत
9. च—शिखरात् प्रासाद
10. च—तदुच्छेद्यताम्
11. क—नाग्रतोऽसुर्विगमे
    ङ—नाग्रतो सविगमे
12. ङ—मोदाय

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रति—( स्मित्वा ) एतदर्थं कथमुद्विजसे ? एतादृश त्रिचतुरहर्म्यं निवेशमौम्यतरः कुन्तलेश्वरावासनिकटे वासो मया युष्मदर्थं कल्पित एवास्ति।

विद्या—सखे ! किमसौ प्रसेननामा कुन्तलेश्वरोऽपि गुण्डिचावलोकनार्थमागतोऽस्ति ?

प्रति—सकुटुम्ब एव।

लीला—नाथ ! यस्य किल चन्द्रप्रभानाम कन्यारत्नं सदृशगुणं वोढारमनधिगम्य अनुद्वैव वर्त्तते, अपि स एव कुन्तलेश्वरः ?

विद्या—स एव।

लीला—( सानन्दं ) नाथ, तन्निकटे वास्तव्यैरस्माभिरवश्यं चन्द्रप्रभा द्रष्टव्या।

विद्या—भवतु इत्युक्त्वा प्रतिहारीनिवेदितेनाध्वनो प्रासादान्निरीय रथमार्गोपकण्ठे घण्टापथ एव तत्र वसतिं चक्रुः[1]।

तदनु—

तत्रावासे[2]निवसता तदा विद्यार्णवेन तु।
नीता सुखेन[3] रजनी जनीजनमनोहरे॥

इतिश्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजिकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
तृतीयः परिच्छेदः।

---

1. ङ—चक्रतुः
2. च—तत् प्रवासे
3. च—निशामुखेन

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# चतुर्थः परिच्छेदः

अनन्तरम्

व्युष्टा निशान्ते प्रतिपद्य सद्यः
श्रुत्वैव यात्रापटहं मुरारेः ।
स्नानादिकृत्यं विधिवद् विधाय
प्रतस्थिरे दर्शनलोलचित्ताः ॥ १ ॥

प्रति—( सत्वरं मञ्चे मार्गे समेत्य ) सखे ! शीघ्रमागम्यताम् । बलदेवप्रासादाद्वहिरानीय परिचारका[1] रथयात्रायै भगवन्तं नेतुमुद्युञ्जते । ( तच्छ्रुत्वा सर्वेऽपि सत्वरं गत्वा—

तेनैव प्रतिहारेण[2] प्रतिहारेण पूर्वतः ।
सद्यः प्रासादमासाद्य भगवन्तमालोकयन् ॥ २ ॥ )

विद्या—( दूरादालोक्य ) सखि लीलावति ! पश्य पश्य,

उत्क्षिप्योत्क्षिप्य नेतुं विपुलकटीतटे रज्जुभिः सज्जिताभि[3]-
र्देवं दृष्ट्वावनद्धं[4] त्रिभुवनजनता बन्ध[5]मोक्षैकदक्षम् ।
गव्यद्रव्यापहारे कथमपि कुतुकात्कल्पितं नन्दपत्न्या
बन्धं श्रीनन्दसूनोर्मनसि न कतमे भावुका भावयन्ति ॥ ३ ॥

लीला—नाथ ! पश्य पश्य,

पादप्रयाणकुतुकी भगवानिदानीं
सन्नाहशालीवपुरञ्चति मन्दमन्दम् ।
आःकारनादपटवः पुरतोऽपि मल्ला
आकारणामिह विभो रचयन्ति शश्वत् ॥ ४ ॥

---

1. क, ख, ग, घ, ङ—परिचारिका
2. क, घ—प्रतिहारे
   प्रतिहारे=पूर्वद्वारोत्यर्थः ( 'घ' पोथिटीका )
   च—reads only one प्रतिहारेण
3. ङ—सम्मिताभि
4. क, ख, ग—दृष्ट्वावनद्धं
5. च—वद्ध

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( साश्चर्य्यं कौतुकम् ) सखे !

पृष्ठापृष्ठि[1] वितन्वते किमनघा मल्लाः प्रफुल्लानना
वाहावाहवि कुर्वते किमपरे वैकुण्ठदौवारिकाः ।
मुण्डामुण्डिकुतूहलं भगवता कैश्चिन् किमारभ्यते
धन्यैषा परिचारकत्वपदवी ब्रह्मादिभिर्दुर्ल्लभा ॥ ५ ॥

लीला—नाथ ! एतेषां कुण्ठितब्राह्मणानामपि भगवत्परिचारकाणाम् ।

किं वेदाध्ययनेन किं सुजनतासङ्गानुबन्धेन वा
किं योगाभ्यसनेन किं गुरुगिरा किं स्यात् क्रियाकौशलैः ।
यैरेतैरवनौ हठेन परमानन्दाववोधाक्षरं
वद्ध्वा रज्जुभिरेव योगिमृगितं ब्रह्मेदमाकृष्यते ॥ ६ ॥

( पुनर्विलोक्य ) महाभाग ! विजयसौकर्याय भगवान् कतिधा निवद्ध[2] एवास्ति ।

विद्या—( स्मित्वा, भगवति प्रेमातिरेकमुद्घाटयन् सपरिहासम् ) प्रिये ! न जानासि ?

येनानेनातिभक्तो बलिरपि बलिना बन्धनं प्रापितः प्रा-
ग्रक्षोऽध्यापराधे जलधिरपि[3] वृथा येन रोषादबन्धि[4] ।
सोऽयं तत्कर्मदोषादिव सुरनिकरै[5]र्वन्द्यपादारविन्दो
गोविन्दो मातृवद्धः समजनि च पुरा साम्प्रतं भक्तवद्धः ॥ ७ ॥

लीला—नाथ ! नित्यमुक्तस्य भक्तबन्धोर्भगवतः केऽयं बन्धनशङ्का । तथा हि—

निखिलहृदयबन्धे ये गुणा जागरूका-
[6]स्त इह वत न शेकुर्य्यत्र सत्वादयोऽपि ।
तमखिलसुखसिन्धुं दीनबन्धुं निबन्धुं[7]
त्रिभुवनवलयेऽस्मिन् के गुणाः सम्भवन्तु[8] ॥ ८ ॥

---

1. ङ—पृष्टापृष्टि
2. क—निबन्ध
3. ख—जलधरपि
4. ङ—दबन्दि
5. ङ—निवहैः
6. ख—स्तुविह वतन
7. क, ख, घ, च—न बन्धुं
8. ङ—संभवन्ते

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रति—प्रभो ! पश्य पश्य, पादचारेण चरति देवराजः ।

विद्या—( आलोक्य, शिरस्यञ्जलिं बद्ध्वा जय जयेत्युच्चार्य ) प्रभो !

उत्प्लुत्योत्प्लुत्य यानादुपलनिपतनोद्भूतडुंडुंनिनादैः[1]
प्रासादे कम्पमाने जय जय निनदैर्दिङ्मुखे पूर्यमाणे ।
शेषेणाशेषवाहाफणाततिभिरधो भूतले धार्यमाणे
मन्दं मन्दं विहर्तुं रथपथमयते श्रीजगज्जीवबन्धुः ॥ ९ ॥[2]

लीला—( विलोक्य, कृतार्थास्मीत्यसकृदुच्चार्य ) आर्यपुत्र !

[3]संवृत्तावर्त्तवात्यारभसविचलनोड्डीयमानाञ्जनाद्रेः
प्रेक्षां प्रेक्षस्व दत्ते [4]पथि पथि निपतन्नुत्पतन्नम्बुजाक्षम् ।
ये मल्लास्तस्य वाहायुगलकटितटीपृष्ठनिष्ठावलिष्ठा-
स्तेऽमी तद्गुल्मवीरुद्भरगुणगुणितां न श्रियं किं श्रयन्ते ॥ १० ॥

विद्या—प्रिये ! जगन्मोहनस्योत्तरद्वारनिविष्टे भगवति-

केचिन्मर्दलकाहलीमधुरिकाघण्टाहुडुक्कानक-
प्राज्यैस्तूर्य्यशतैः पिधाय वसुधां[5]निर्य्यन्ति नियन्त्रिताः ।
किं च—मेघाडम्बरचारुचामरसितच्छत्रध्वजादि प्रभो-
र्बिभ्राणाः कतिचित् परिच्छदशतं जाग्रत्यमी चाग्रतः ॥ ११ ॥

लीला—नाथ ! वारम्वारं कमलाकान्तमुखकमलमालोक्यमानापि न तृप्यामि ।

विद्या—प्रिये ! तदवलोकनेन कस्य तृप्तिरुत्पद्यताम । तथा हि—

मित्राद्याः[6] स्पृहयन्ति चेतसि चतुर्वक्त्राय दृक्काम्यया
सोऽन्तः षण्मुखशालिने स च पुनः पञ्चाननाय स्वयम् ।
सोऽपीन्द्राय सहस्रलोचनजुषे शेषाय सोऽप्युच्चकैः
कस्यैवं नलिनाक्षमीक्षितुमभून्नेत्राय नात्रादरः[7] ॥ १२ ॥

---

1. ग—द्रूत तुड् भूनिनादैः
   च—द्रूत डुब् डुब् निद्रेः
2. ङ—Ms. omits the sloka
3. क, घ—सम्वतोद्वृत्तर
4. च—प्रेक्षं प्रेक्षं स्वदन्ते
5. ङ—ककुभो
6. च—मित्रासः
7. ङ, च—नेत्रादरः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—नाथ ! पश्य पश्य,

यदिह मुकुलीभूतं शीर्षे कराम्बुरुहैर्नृणां
सुमुख[1]कमलैर्जातं फुल्लैर्यदद्य हृदम्बुजैः।
विलसितमिदं किं स्यादिन्दोः किमर्क[2]विजृम्भितं

(पुनर्विलोक्य) नाथ ! नहि नहि,

शशिरविदृशोर्लक्ष्मीभर्तुर्विलोचनकर्म तत् ॥ १३ ॥

विद्या—(ससन्तोषम् प्रिये ! सम्यक् समर्थितं भवत्या । (यदीदृक् पद्मानां निमीलनोन्मीलने ईदृक् [3]पुष्पवतोरेव कृत्यं भवितुमर्हतीत्युक्त्वा पुनर्भगवतः पदप्रयाणप्रयासपरायणान् परिचारकानवलोक्य) प्रिये ! पश्य, पश्य। एते हि—

आनीयानीय मध्ये पथमथ तृषिताः स्थापयित्वा मुहूर्तं
पीत्वा कर्पूरपूरैः सुरभितशिशिरं पानकं पानमत्ताः।
आन्दोल्यान्दोल्य किंचिद् कियदपि विभुमुत्तानमाधाय सम्यक्
वक्त्रेन्दोर्दर्शनार्थं किमिव दिविषदां हन्त कर्षन्ति हर्षात् ॥ १४ ॥

प्रति—सखे। महाविमर्दसंकटादितो निष्क्रम्य पूर्वसोपानवीथीं दक्षिणेन प्राचीर[4]मवष्टभ्य भगवतः पदप्रयाणपरिपाटीं परिशीलयाम (इति सर्वे तथा कुर्वन्ति)।

विद्या—(उर्द्ध्वमवलोक्य) प्रिये, निरीक्ष्यताम्—

मुरारिपदपातनस्फुटदुदग्रतूलीतला-
न्निरीय पवनोत्किरा गगनमेत्यतूलोत्कराः।
अनक्षरमसूचयन् भगवदङ्घ्रिपद्मं स्पृशन्
क एष दिवि रोचते न मरुदश्वितः[5] सन्निति ॥ १५ ॥

---

1. क, ख, ग, घ—समुख
2. ङ—किमिव
3. च—पुण्यवतो
4. च—प्राचीन
5. ग—मरुदश्नतः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( पूर्वतो वहिरवलोक्य ) महाभाग, सिंहद्वारान्निर्गत्य रमारमणो नन्दिघोषं परिक्रामति।

विद्या—( निपुणं निरूप्य ) सखि लीलावति, पश्य—

किमिव वनकरीन्द्रः कन्दरे मन्दराद्रौ[1]
किमिव नभसि सन्ध्याकर्बुरे कालमेघः।
मिलति[2] तपनपुत्री किं तटे रत्नसानो-
र्विशति किमु तमालश्यामलो नन्दिघोषे ॥ १६ ॥

लीला—नाथ,

किं प्रारम्भि समाधिना मुनिमनःपुञ्जेन वा निर्मितो
वेदान्तैरुपपादितो नु परमव्योम्नाथ संपादितः।
किं त्वद्वैतधिया व्यधायि स रथः सम्यङ्न जानीमहे
यस्यान्तः स्फुरति प्रमोदकलिलं[3] ब्रह्माभिधानं महः ॥ १७ ॥

विद्या—सखि, तवेयं[4] वितर्कपरंपरा उपपन्नैव। यत्रानुभवमेव[5] प्रमाणयसि। ( पुनारथत्रयीमालोक्य प्रियां दर्शयन् ) प्रिये! पश्य, पश्य—

एष श्रीजगदीशकेलिवसतिः श्रीनन्दिघोषाभिधा
नानापापचयाटवीषु दवति[6] श्रीवैनतेयध्वजः।
चित्तं मत्तमिवातनोति हलिनस्तालध्वजालंकृतो
भद्राया दृशि भद्रमाशु तनुते सिंहध्वजोऽयं रथः ॥ १८ ॥

एष हि—

हरितालहिङ्गुलरसानुरञ्जिताः
कनकारुणोपलविनिर्मिता इव
प्रतिमाः पुरन्दरपुरी नितम्बिनी
प्रतिमा हरन्ति हृदयं हठेन नः ॥ १९ ॥

---

1. ङ, च—मन्दराद्रेः
2. क—मिलित
3. क—कनिलं
4. क, च—कवेयं
5. च—यत्रानुत्तरमेव
6. घ—वनवह्निरिवाचरति ( पोथिटीका )

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( साकाङ्क्षम् ) नाथ ! भगवद्वदनारविन्दसक्तलोचनतया नावधारितमस्माभिस्तालध्वजमारूढो रेवतीरमण इति। तदेहि, इतो निर्गत्य रथारूढां भद्रामपि भद्रमालोकयामः ( इति सर्वे तथा कुर्वन्ति )।

विद्या—प्रिये !

जनयति[1] सुरभर्त्तुर्योविमानं विमानं
भवति यदवलोकात्पुष्पकं शष्पवृद्धिः[2] ।
खगपतिरपि येन स्पर्द्धते नित्यगृध्नुः
ससविदुरितमोपो वन्द्यतां नन्दिघोषः ॥ २० ॥

लीला—( तथा कृत्वा दूरादाकर्ण्य ससंभ्रमम् ) नाथ ! यात्रिकानत्र घण्टापथे द्विधा कुर्वन् डिण्डिमाडम्बरपुरःसरः कोऽयं कोलाहलः।

विद्या—( उद्ग्रीवः सन्नवलोक्य ) प्रिये ! किमुद्विजसे ?

एते खलु भगवद्रथाकर्षत्वात्कर्ष[3]करम्बितमानसाः कालपृष्ठाः[4] । ते च–

दण्डादण्डिप्रकारं पथि पथि दधतश्चन्दनैश्चर्चिताङ्गाः
बद्धोष्णीपोत्तमाङ्गाः स्वकटितटनटत्किङ्किणीक्वाणभाजः ।
हो हो इत्युन्नदन्तो द्रुतमनुचलिताः संघशो ग्राम्यगीतैः
काष्ठानिष्ठावलिष्ठाः कलकलमतुलं कालपृष्ठाश्चलन्ति[5] ॥ २१ ॥

तदनु यथाविधि परिचर्यां विधाय गजपतिना उत्तमाङ्गे न प्रहिता रथत्रयी[6] चलतिस्म[7] ।

विद्या—प्रिये !

सौवर्णान् भद्रकुम्भानुपरिनिदधतश्चामरैश्चारुरूपाः
स्वर्णैस्ताम्बूलपर्णैर्दिशिदिशि खचिताः किङ्किणीजालभाजः[8] ।
कौशेयैः क्षुद्रचन्द्राकृतिमुकुरयुतैः सर्वतः संवृताङ्गा–
घण्टावन्तः प्रयाणं मृदु मृदु दधिरे स्यन्दना नन्दयन्तः ॥ २२ ॥

---

1. च—रचयति
2. ग—पुष्पवृद्धिः
   ङ—स्वल्पवृद्धिः
3. च—कर्षगहर्षोत्कर्ष
4. च—काकपृष्ठाः
   (कालपृष्ठाः = A caste of Savaras employed in drawing the cars during the Car Festival.)
5. ग—कालपृष्ठाश्चरन्ति
   च—काकपृष्ठाश्चरन्ति
6. च—द्रयी
7. ङ—चलितास्म
8. ङ—तालभाजः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च-

उद्भ्राम्यस्चक्रचक्रोत्कटविकटतरक्रैंक्रियाप्रक्रियोद्यद्-
दिग्दन्तीद्राविघण्टारवमिलितजयागावसंमूर्च्छिताभिः ।
आनन्दोन्मत्ततत्तत्सुजनकरपुटीतालिका[1] मालिकाभिः
कान्ते ब्रह्माण्डभाण्डः स्फुटमतिरभसात्खण्डखण्डीकृतो नु[2] ॥ २३ ॥

लीला- नाथ ! प्रेक्ष्यतां भगवदुपरिष्टात् कीदृशश्चन्द्रातपो रथमध्ये निबद्ध एवास्ति । मन्ये-

चन्द्रातपान् प्रसरतो बहिराक्षिपन्ति
यद्भानवो दिनपतेरतिदुर्निरीक्षाः ।
तेनातिभीत इव मण्डनकैतवेन
चन्द्रातपः पटमयोऽपि रथे निलिल्ये[3] ॥ २४ ॥

विद्या—( दिनकरकरनिकरकरम्बिततया दुर्निरीक्ष्यस्वभावं तोरणगणमालोक्य ) प्रिये लीलावति !

किं तोरणानि परितो रथपुङ्गवानां
नालोकसे मणिमयानि यदंशुजालैः ।
चित्रीकृतं गगनमण्डलमिन्द्रचाप-
लक्ष्योपलक्षितमिवास्ति निरीक्षणीयम् ॥ २५ ॥

लीला—( रथोपरि पवमानसंपर्कोल्लासमानचञ्चलाञ्चलां पताकां[4] निरीक्ष्य ) नाथ ! पश्य पश्य,

ये निर्वाणपथार्थिनो जगति ये गीर्वाणराज्योत्सुका
ये वा भक्तिकथानुरक्तमनसः कृष्णे सतृष्णात्मतः[5] ।
ते ते पूरयत स्ववाञ्छितमितः प्रत्येकमित्थं रथै-
राहूता जनता करैरिव यदान्दोलैः[6] पताकाञ्चलैः ॥ २६ ॥

विद्या—( रथोपरि भगवन्तं दर्शयन् ) प्रिये !

---

1. घ—तालिता
2. क—कृतोनु
3. ख—निर्लील्ये
4. ङ—रथोपवनमानसंपर्कोल्लसमान चञ्चलाञ्चलाः पताकाः
5. ग, ङ—सतृष्णत्वतः
   च—सतृष्णामतिः
6. ग,ङ—घनान्दोलैः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

दौर्भाग्यं किल दूरयन् सुमनसामभ्यर्थितं पूरयन्
पापिष्ठानिव तर्जयन् सुकृतिनो भक्तानिवावर्जयन् ।
जाड्यं निर्दलयन् शुभानि कलयन्नानन्दमुद्वेलयन्
पश्य श्री जगदीश्वरो विजयते श्री नन्दिघोषोपरि ॥ २७ ॥

लीला—( रथमध्यमालोक्य कान्तं दर्शयन ) नाथ !

अधःकनकपट्टिकारचितकुट्टिमालंकृत—
स्तथोपरि हरिन्मणिच्छुरितचारुहीरच्छविः[1] ।
समाग्रमणिमौक्तिकाकलितसम्भवस्तम्भभा—
गसौ कनकमण्डपो वसति पश्य मध्ये रथम् ॥ २८ ॥

विद्या—( दृष्ट्वा ) प्रियं ! पश्य पश्य । तदुपरि

मा पुनः प्रभननौ घनधाराः संपतेयुरिति शङ्किभिरेभि
सादनानि[2] वसनानि समन्ताच्छादनानि निहितानि[3] रथान्तः ॥२९॥

लीला—( घण्टापथे उर्द्धमालोक्य सविस्मयम् ) नाथ !

दाहोत्तीर्णसुवर्णनिर्मितमहास्तम्भाग्रसंभागिणी[4]
मुक्ताजालविलम्बिनी परिगतस्वर्णाम्बरोद्भासिनी ।
आमुक्ता पटुपट्टरज्जुनिकरैरेषा वितानावली
सिंहद्वारपथाद्रथोपरिलसत्यागुण्डिचामण्डपम् ॥ ३० ॥

विद्या—प्रिये ! इतः कौतुकमवलोक्यताम्—

मुदायुक्तैर्भक्तैः क्वचिदगुरुजाधूमलतिका[5]
कृता मार्गे मार्गे जनयति घनाडम्बरधियम्[6] ।
यदालोकादेते प्रतिसदनमुत्सिक्तमनसो
लसत्केकाश्छेका[7] दधति नटनं केकिनिचयाः ॥ ३१ ॥

---

1. ग—हारच्छविः
ङ—हीरच्छदः
2. ख, ग, ङ—सादनानि
3. च—विहितानि
4. ङ—सम्भारिणा
5. क—धूपलतिका
6. ङ—विधिम्
7. ग—श्चेते

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रति—सखे ! निभाल्यतां कीदृक्संमर्दशालीयात्रोत्सवः ।

प्रेङ्खोलच्चामरोर्मिप्रकरमकरः सज्जगज्जूरगेन्द्रो[1]
भेरीढक्काहुडुक्काध्वनिभरभरितो मत्तमातङ्गमङ्गी[2] ।
संक्रीडच्चक्रनक्रो नृपतिकुलसितच्छत्रडिण्डीरपाण्डुः
स्थाने स्थाने वहित्राकृतिरथगतिमान् प्रेक्ष्यतां गुण्डिचाब्धिः ॥ ३२ ॥

लीला—( सपरिहासम् ) नाथ ! इतः

पुरुषा विमर्दमृदिताः[3] परस्परं परुषाक्षरं कति न भर्त्सयन्त्यमी ।

विद्या—( सजुगुप्सम ) प्रिये ! इतः

प्रमदा मनोरमयुवाङ्गघट्टनप्रमदाकुलाः कति हसन्ति नोत्सुकाः ॥ ३३ ॥

लीला—( स्मयते ) ।

प्रति—सखे ! पश्य,

असूर्यंपश्यानामपि नृपतिशुद्धान्तसुदृशां
दशामेतामन्तःकलय करुणासिन्धुपुरतः ।
विमर्दे प्रभृष्टाम्बरमपि नितम्बद्वयमिमां
वहन्ते नेहन्ते पुनरपि पिधातुं सुचकिताः[4] ॥ ३४ ॥
( सर्वेऽपि स्मयन्ते )

विद्या—सखे ! अपि सकुटुम्बा नृपतयोऽप्यत्रदूरादायान्ति ?

प्रति—किमुच्यते, न पश्यसि ?

काशीशः कोशलेन्द्रः कुरुनगरकुरुक्षेत्रकाम्पिल्लनाथाः[5]
काम्बोजः केरलेन्द्रः कलवलनृपति[6] कुन्तलाधीश्वरोऽपि ।
काञ्चीभर्त्ता कलिङ्गक्षितिपकुलमणिः कन्यकुब्जाधिनाथो
नानासम्पत्तिभङ्ग्या कति कति न नृपा गुण्डिचां मण्डयन्ति ॥ ३५ ॥

---

1. क—सज्जरज्जवरगेन्द्रो
2. ग—भङ्गी
3. ख—मृदता:
4. ग, ङ—मुचत्रिता:
5. च—कम्पिल्लनाथाः
6. ग—कलबलकपतिः
ङ—कलबकपतिः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( तालध्वजस्थ पुरतः लीलावतीं दर्शयति ) प्रिये !

कन्नून् काम्बविका मृदङ्गपटलीं मार्दङ्गिकाः सर्वतो
वेणून् वैणविका घनं घनभृतो वीणातर्तिं वैणिकाः।
केचिन्मौरजिका[1]स्तथैव मुरजानादाय नादाकुलेऽ-
प्यस्मिन्[2] यात्रिकसंकुले पथि पुनर्मादयन्ति वाद्यादृताः ॥ ३६ ॥

लीला—नाथ ! एषामयं वाद्यारम्भो[3] भगवद्भक्तिप्रतियोगिक एव न शुश्रूषुः[4] प्रतियोगिकः, यत्[5] शब्दाद्वैतप्रतिपादिनि यात्राकोलाहलेऽपि एतादृशः प्रवर्त्तते ।

विद्या—कः सन्देहः ? यदीदृशेऽपि यात्राविमर्द्दे

यो यो विधत्ते यद्यत्तु यत्र यत्र यथा यथा ।
तत्सर्वं भगवान् वेत्ति तदेवैश्वर्य्यमीशितुः[6] ॥ ३७ ॥

लीला—( तदनु रथोपरि सुचिरं निर्वर्ण्य सविस्मयम् ) नाथ ! किमिदं ? पश्य पश्य-

विष्णोर्निर्माल्यमाल्यं[7] लुलितकचशिरो मध्य एवावनद्धं
विभृत्तैरेव केशैर्विरचितसकलश्मश्रुकूर्चप्रपञ्चः ।
कस्तूरीपङ्कशङ्काजनकघनमसीलेपलिप्ताननाक्षो
वक्षो व्यालम्बिमालाकुलकलितरुचिश्चन्दनैश्चर्चिताङ्गः ॥ ३८ ॥

किं च-

दण्डं दत्वाण्डकोपे युवतिकुलमिवोद्दिश्य च ग्राम्यगीतिं
गायं गायं[8] शताङ्गोपरि च परिपतन्नुत्पतन्नष्टलज्जः ।
भ्रातर्भ्रातर्ब्रुवाणो निखिलजनमुख[9]प्रेक्षणेनोन्मदिष्णुः
कोऽयं भर्तुः पुरस्तात् किमिव न कुरुते कीदृशोऽयं प्रकारः ॥ ३९ ॥

विद्या—प्रिये, न जानासि ? [10]रथवाहकोऽयं स्वकृत्यं दर्शयति ।

---

1. च—मौरविका
2. ङ—तस्मिन्
3. ख—वाद्यारसो
4. च—न तु मुण्ठु(?)व
5. ङ—सदा
6. क—मीशुतुः
7. ङ—लुलति
8. क—चायं शायं
9. क—जनमुखे
10. च—रस

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—अदृष्टचरं[1] तच्चरितम् ( पुनरालोक्य[2]सकोपमिव ) आर्यपुत्र किमीक्षसे ? अयं हि किं—

कटिं कीदृग् धत्ते वहति वदनं कीदृशमिदं
करे दण्डं कीदृक् कलयति कथं पश्यति जनान् ।
हठादङ्गीकुर्वन्निजवपुषि भङ्गीशतमहो
प्रभोरग्रे कीदृक्चरितमपराधी रचयति ॥ ४० ॥

विद्या—प्रिये ! नायमपराधी । किन्तु भगवत्प्रीतये तादृशग्राम्यगीतिरसेन रथं वाहयन् प्रत्युत तदाराधनमावहति ।

लीला—( अविश्रब्धम् ) नाथ ! एतादृशाश्लीलवर्णाकर्णनेन[3] भगवदाराधनमिति भणसि ?

विद्या—नोचेत् किम् ? ( इत्युक्त्वा तदेव प्रतिपादयति ) । प्रिये !

यः पूर्वमेव भगवान् मथुरोपकण्ठे
ग्राम्याङ्गनासु विहरन्नहरहर्दिनानि ।
अद्यापि तेन किमयं चिरवासनाया
ग्राम्यासु गीतिषु जहाति न रागबन्धम् ॥ ४१ ॥

लीला( सविस्मयम् ) नाथ ! निखिलदेवाधिदेवस्यापि ग्राम्यगीतिषु रागबन्धः ।

विद्या—प्रिये, न जानासि ?

वन्दन्ते सततं यदङ्घ्रिकमलद्वन्द्वं महेन्द्रादयो
यं ध्यायन्ति युगान्तहेतुमनिशं योगेन योगीश्वराः ।
शम्भुः सोऽपि दिगम्बरः पितृवने भ्राम्यन् मुहुर्भिक्षते[4]
तत्किं विस्मयसे मृगाक्षि महतां रीतिः किलैतादृशी ॥ ४२ ॥

( इत्यभिधाय सकलाश्चर्यनिधानभूते चास्मिन् महोत्सवे सर्वत्र भ्रान्त्वा भ्रान्त्वा[5]कौतुकवस्तून्यालोकयाम इति प्रतिहारिणा समं परिभ्रम्य मध्ये पथं संकीर्त्तनगोष्ठी[6]परिनिष्ठितान् वैष्णवानवलोक्य सोल्लासम् ) प्रिये ! पश्य पश्य ।

---

1. च—अदृष्टतरं
2. ख, घ—पुनरालोच्य
3. घ—वर्णानाकर्णनेन
4. ङ—मुहूर्तक्षते
5. क, घ, ङ—भ्रान्त्या भ्रान्त्या
6. क, ख, घ—नर्त्तनगोष्ठी

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

केचिन्नाम पठन्ति दानवरिपोः केचिल्लुठन्ति क्षितौ
केचित् प्रेमभरेण गद्गदगिरः क्रन्दन्ति नन्दन्त्यपि[1] ।
केचित्कीर्त्तननर्त्तनादिविविधव्यापारपारङ्गमाः
पुञ्जीभूय परिभ्रमन्ति परितो धन्याः परं वैष्णवाः ॥ ४३ ॥

लीला—( सादरं तदङ्घ्रिरेणून् शिरसि निधाय ) नाथ ! पश्य, पश्य । एषां मध्ये

धैर्यध्वंसिरणन्मुरारिमुरलीमाधुर्यचर्याभ्रमद्[2]
गोपीचित्रचरित्रगायनसुधासौरेयपानोन्मदाः ।
मग्नाः कृष्णकथापरासु ददतो गण्डे च गण्डं रमा-
दन्योन्यं परिरभ्य केचन पुनस्तूष्णीं चिरादासते ॥ ४४ ॥

विद्या—प्रिये ! एषामितः —

दिग्भागान् बधिरीकरोति गगनाभोगं तथा पश्य-
न्त्यन्तः कर्णपुटं[3] पतत्पततयत्यहो[4] भरं रंहसा ।
नत्तर्यन्कनन्नानुगमहामार्दङ्गिकाङ्गीकृतो
धारायाहितया धिनोति [5]जननामुत्तालतालध्वनिः ॥ ४५ ॥

लीला—( सानन्दकौतुकम् ) पश्य, पश्य ।

दुर्वारा धरणौ पतन्ती विघुरीभूयोत्पतन्तिक्षणा-
देकेनैव पदा भ्रमन्ति परितः प्रोत्क्षिप्य बाहुद्वयम् ।
सानन्दा नयनाम्बुपूरितहृदो[6] रोमाञ्चभूमाञ्चिता
मारान्तो हरिभक्तियुक्तिसुधया दुश्चन्ति[7] भावं वहिः ॥ ४६ ॥

विद्या—प्रिये ! कौतुकमालोक्यताम् । इतः

वालः कृतकरतालो नटति पुरस्तात् प्रमोदश्च मातुश्च ।
अत्र च यात्रिकवर्गैर्हसितोऽपि हसन्मुखः स्वैरम्[8] ॥ ४७ ॥

---

1. क—नन्दत्यमः
2. च—भ्रमैः
3. क, ख, घ, च—कर्णपुटं
4. क, ख, ग, घ—न्मंहो
5. क, ग—जलना
ङ—जगती
6. च—दृशो
7. च—मिश्रन्ति
8. ङ—स्वैरम्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( ससन्तोषम् ) नाथ ! अद्य जन्मनः कृतार्थता लब्धा ; आसादिता नयनयोः साफल्यापत्तिः[1]; अपवर्गमार्गे निरर्गला एव कृताः पितरः ; गताःस्म सकलानृण्यं जाताःस्म [2]परमपुरुषार्थ-भाजनम् ; पूर्णा मे मनोरथाः ; कृतं च कर्त्तव्यम् ; दत्तानि निखिलानि च दानानि तप्तं च तपः ; जगदीशगुणानुकीर्त्तननिरपेक्षशरीराः परमभागवता एते पुरः प्रत्यक्षीकृताः ।

विद्या—( श्रुत्वा सप्रशंसम् ) प्रिये ! सत्यमाह भवती[3],

येऽमी लोचनगोचरा हृदयतो लुण्ठन्ति दुर्वासनां
स्पृष्टा[4] दुर्गतिमुत्क्षिपन्ति महता[5]मुष्णन्ति तृष्णाम्बुधिम् ।
सङ्गादेव समृद्धयन्ति भगवद्भक्तिप्रवाहोदयं
तेषां स्पर्शनदर्शनादि लभते को[6] मन्दभाग्यः[7]पुमान् ॥ ४८ ॥

लीला—( अन्यतोऽवलोक्य ) नाथ ! ऐते सौधाङ्गणे चित्रोत्कीर्णा इव निश्चलमूर्त्तयो जटामण्डल-मण्डिता अगणितवर्षातपाः किमिति सौधकुटीभ्यो वहिर्निवसन्ति ?

विद्या—( दृष्ट्वा प्रणम्य ) प्रिये ! ऐते खलु ,

जटिलाः कुटिलान्यभावयुक्ता निटिलान्तर्नयनाः समाधिभाजः
प्रणवाक्षरमेकमभ्यसन्तो न वहन्ते कुटिलालसां मनस्सु ॥ ४९ ॥

( पश्चादवलोक्य ) एते खलु कुलशीलशालिनः सदाचारपरिनिष्ठिताः सकुटुम्बाः सहस्रशो द्विजपुङ्गवा जगदीशमुखारविन्दविलोकनसुखानुभवभागिनोऽपि[8] सदनानवाप्तेः कदनाकुला [9]आरामनिवासाय निर्यान्ति । वयमपि तत्र गत्वा विश्रम्य पुरस्ताद्यात्रामालोकयाम ( इति विचार्य्य सर्वेऽपि ब्राह्मणैर्दर्शिताध्वान आरामे प्रविशन्ति ) ।

विद्या—( तत्र प्रविश्य ) सखे ! निरीक्ष्यतामुपवनम्-

पुन्नागनागेश्वरकोविदार [10]हिन्तालतालामलकाम्रशोभि ।
एतत्समीक्ष्यैव मनो मदीयं गन्तुं न रन्तुं वलतेऽपरत्र ॥ ५० ॥

---

1. च—साफल्य पङ्क्तिः
2. ङ—सकल
3. क, ख—भगवती
4. ङ—स्पृष्ट्वा
5. घ, ङ, च—महिता
6. ङ—नो
7. च—मन्दभागः
8. ङ—रागिनोऽपि
9. ङ—न्यराम
10. च—दत्तानगाला

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( सर्वतोऽवलोक्य ) नाथ, पश्य पश्य—

स्थाने स्थाने ब्राह्मणाः ब्रह्मकल्पाः सार्द्धं सर्वैर्मित्रपुत्रादिवर्गैः ।
नाना भातं भक्ष्यभोज्यादिजातं प्रत्येकं ते विष्णवे कल्पयन्ति ॥ ५१ ॥

विद्या—( विहस्य सपरिहासम् ) अहो, लीलावत्या गरीयानशनायावेशः[1] यद्भक्ष्यभोज्येष्वेव दृष्टिर्निपतति न सन्निर्दिष्टेषु दर्शनीयेषु तरुगुल्मादिषु ।

लीला—( स्मित्वा ) भवतु को दोषः । त्वदुच्छिष्टे लोभ इति यदभियुक्तैरुक्तमस्ति तत्किमार्यपुत्रेण विस्मृतम् ?

विद्या—प्रिये ! सत्यम् । परन्तु[2] भक्तिभुक्तिनिबन्धनयोर्लोभयोः[3] कियदन्तरमिति विवेकिनी विवेक्तुमर्हतु । ( इति श्रुत्वा सर्वे हसन्ति । )

अत्रान्तरे प्रमदमत्तजनाननोत्थ[4]—
कोलाहलैर्मुखरयन् दशदिङ्मुखानि ।
घण्टारवोत्तरमसौ[5] बलिमण्डपान्ते
श्रीनन्दिघोषविजयी सहसा विरामीत् ॥ ५२ ॥

सर्वेऽपि श्रवणानन्तरमेव झटित्यागमतो निष्क्रम्य यात्राकौतुकिनः प्रमुदितान्तःकरणा बलिमण्डपमासेदुः ।

विद्या—( तत्र च निरवद्यानि भगवदास्वाद्यानि नैवेद्यानि निरीक्ष्य प्रियां प्रति ) प्रिये !

अहीनवामोच्छलिते[6] समन्तादनन्तभोगैरुपचीयमाने[7] ।
भूमितलस्थे बलिमद्मनीह केषां न जाता बलिसद्मवृद्धिः ॥ ५३ ॥

किं च—अमृतकदलीमुख्या[8]मिक्षामरोत्करसंकर-
महिषपयसा मत्स्यण्डीभिः[9] कृताः कति[10] कुण्डशः ।

1. घ, च—आवेगः
2. क, ङ—भुक्ति
3. क—लोभयोः
4. ख—जनाननोत्थ
5. च—ममरी
6. च—वलिते
7. ङ—कर्मा[illegible]
8. ग—मुख्या
9. ग—मण्डिकाभिः
10. ङ—Ms. omits 'कति'

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

कति च मरिचक्षोदादभ्राः गिताभ्रसुगन्धयः
कति वलिगृहे संलक्ष्यन्ते प्रपानकपंक्तयः ॥ ५४ ॥[1]

लीला—( सर्वतः समीक्षमाणा ) नाथ !

एतस्मिन् वलिमण्डपे कतिविधा गोधूमरूपाः प्रभो-
र्लक्ष्यन्ते पुरतस्तथा [2]परिणताश्चञ्चन्ति चूतोच्चयाः।
वीक्ष्यन्ते कदलीफलानि कदलीपत्रोदरे कूटशो
मुद्गाढाः किल यत्र[3] दानवरिपो स्ते चापि मुद्गाङ्कुराः ॥ ५५ ॥

प्रति—सखे ! इतः —

द्राक्षादाडिमनागरङ्गकदलीशृङ्गाटकानि क्रमा-
द्दीयन्ते सुपरिष्कृतानि[4] विभवे भक्त्या न कैर्मानवैः ।
के वा नात्र विभज्य साधुपनसान्याशाय कुम्भोदरे
श्रीभर्त्रे विनिवेद्य भूसुरकरे न्यस्यन्ति पश्या इतः ॥ ५६ ॥

विद्या—( श्रुत्वा सकरुणम् ) प्रिये ! इतः कस्याश्चिद् दुर्भगायाः दैन्यमवधार्य्यताम्[5]; दुःखितेयं प्रभोः पुरः कथं विज्ञापयति। ( सर्वे शृण्वन्ति )

दुर्भगा—देव !

श्वश्रुर्वाचाश्रुवर्षं[6] जनयति ददते यातरो जातरोषाः
केशाकर्षं प्रियो मे परमतिकुमतिर्वेत्ति वक्तुं दुरुक्तम्[7] ।
माता भ्राता पिता वाप्यवति[8] वत न मां त्वं कृपालोऽनुकम्पा-
हीनश्चेद् दीनवन्धो कथय कथमहं वासरान् वाहयेयम्[9] ॥ ५७ ॥ ( इति रोदिति ) ।

लीला—( श्रुत्वा सानुक्रोशम् ) नाथ !

कोटिकोटि शतकोटिनिर्मितं दुर्भगाहृदयमेव मन्महे[10] ।
यत्तु दोषविरहेऽपि यातनामीदृशीमनुभवत्य[11]र्दार्य्यते ॥ ५८ ॥

---

1. ग, ङ—Mss. only read this verse.
2. ङ—परिणता
3. क—मद्गाता कलयन्ति
4. च—सुपरिक्षितानि
5. ख—मर्वषिनाम्
6. ख—श्वाचाम्बर्षं
7. ङ—दुरुक्ते, च—दुरुक्ति
8. क—तीवति, च—त्यजति
9. ङ—यापयेयं
10. च—मन्महे
11. क—भवनत

विद्या—प्रिये ! दैवाधीने जगति एवं किमुच्यते ? यतः—

दानं केऽपि दिशन्ति भूरि कतिचिद्याचन्त्यहो याचकाः
धावन्त्यत्र धनाय केऽपि कतिचित्तद्रक्षणे न क्षमाः ।
दीनाः केऽपि वहन्ति हन्त शिविकां तां केचिदध्यासते
पश्य प्राक्तनकर्मणां परिचयः कीदृग्विचित्रोदयः ॥ ५९ ॥

लीला—नाथ ! प्राचीनकर्मणां[1] विविधफलोदयः किमिति वैयधिकरणेन भवता प्रदर्श्यते[2] ? यतः—

यानारूढाः केऽपि यानं वहन्ते
निःस्वाः केचिद्यान्ति कोटीश्वरत्वम् ।
भूपाः केचिन् कुर्वते[3] भृत्यकृत्यं
लोकैरेवं भुज्यते कर्मपाकः ॥ ६० ॥

( इत्युक्त्वा पुनरन्यतोऽवलोक्य ) नाथ !

अप्यन्यैः परितः परीत्य कुतुकात् सानन्दमालोकिता
भास्वद्भास्वरमूर्तयः सितपटाः श्वेतोर्ध्वपुण्ड्रोज्ज्वलाः ।
नानाकारतया तताङ्गुलिशिखं संचारयन्तः करा-
नन्योन्यं द्विजपुङ्गवाः कथमिमे कोलाहलं कुर्वते ॥ ६१ ॥

विद्या—( दृष्ट्वा दृष्ट्वा ) प्रिये ! आगम्यताम् । एतासु शारदासिकतासु निविष्टान् सकलशास्त्रविशारदान् [4]पण्डितानवलोकयामः । ( इत्युच्चार्य सत्वरं गत्वा सन्निधौ स्थित्वा प्रियां प्रति )—

सैषा पण्डितमण्डली सुनयने वैतण्डिका कुण्डली-
भूता यत्र परस्परं विदधते वादाय वाग्डम्बरम् ।
गङ्गानिर्गलभङ्गभङ्गिविगलद्गीर्वाणवाणीच्छटा-
प्रोद्भूतप्रतिभाविशेषचकितप्रत्यर्थिसार्थं मुहुः ॥ ६२ ॥

तत्रापि किं जगत्कारणमित्यनुयुञ्जानं मीमांसकं प्रति कापिलो ब्रूते— हंहो जरन्मीमांसक !

त्रिगुणात्मिकाप्रकृतिरेव कारणं पुरुषः परः प्रकृतिमीक्षते परम्[5] ।
सुखदुःखमोहमयमेतदन्वहं परिपश्यतस्तव किमस्ति संशयः ॥ ६३ ॥ इति ।

---

1. ग—द्विविधः
2. घ—प्रदशते
3. क—भुवि ते
4. च—विवदमानान् पण्डितान्
5. क—परः प्रकृतिरेवमीक्षते पुरम्
ख—पुरुषः प्रकृति मीक्षते परम

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

एवं वैसादृश्येऽपि कारणत्वं दृढीकृत्य संप्रति ब्रह्मणो जगत्कारणत्वे श्रुत्यर्थं प्रमाणयति ।

यस्मादेतानि भूतान्यपि दधति जनिं[1] येन जातानि जीव-
न्तीत्यादीनां श्रुतीनां वदतु वितथतां[2] कोऽनु चार्वाकतोऽन्यः ।
यत्रैकत्रश्रुतेऽपि श्रुतमखिलमिदं जायते तत् कथं वा
भिन्ने सद्वस्तुमात्रात् क्वचिदपि जगतो हेतुभूते[3] घटेत[4] ॥ ६७ ॥

[ मध्ये नैयायिकोऽपि स्वमतमुद्घोषयन् ब्रवीति । भो भो भ्रातर् !

कार्यत्वाद्भूजलादेर्घटवदनुमितः कोऽपि कर्ता स चेशो
भूयान्नोचेत् परस्य त्रिभुवनघटने कस्य शक्तिर्घटेत ।
तं तु ब्रह्मेति केचित् कतिचनपुरुषं केऽपि कर्मेति जाल्मो
जल्पन्तो वादिवैतण्डिकपदमुदिता नैकधा कल्पयन्ति ][5] ॥ ६८ ॥

अनन्तरं मध्ये गलगर्जनं विधाय मीमांसकः स्वमतमेकान्तमुत्थापयन् सर्वानाक्षिप्य वदति—
अरे वालिशाः !

ब्रूते वः श्रुतिरेव चेज्जगदिदं नानादृशं जातु चेत्
तत् साक्षात् क्रियतेऽपि चेन्नकिमयं नित्यः प्रपञ्चोदयः ।
क्व ब्रह्मप्रकृतिः क्व चाप्यनुमितिः कर्ता च कोन्वीश्वरो[6]
रे रे मायिकसांख्यहैतुक वृथावाचाट मूको भव ॥ ६९ ॥

[ पुनरपि सर्वानपि कर्म कारयितुं प्रवृत्तो जरन्मीमांसकः गुडजिह्विकान्यायेन प्रलोभयन्नाह—
किं च रे !

यद्युच्चैर्गन्तुमिच्छा प्रसरति नितरां त्रिदिवे नन्दने वः
किं वा रम्भादिबिम्बाधररसरसने लालसा लालसीति ।
यद्वा नित्यामरत्वे मतिरतिरसिका तद्भवज्ञा[7] भवन्तः
श्रद्धावन्तो यतन्तां सपदि विघटने कर्ममार्गार्गलायाः ॥ ७० ॥ ][8]

---

1. ख- जनं
2. ङ—विदधतां
3. ख—हेतुभूतां
   ङ—घटेति
5. ग, ङ—Omit the bracketed portion.
6. क, घ, च—मे नीश्वरो
7. क, घ—तद्भवन्तो
8. ग, ङ—Omit the bracketed portion.

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

एतच्छ्रुत्वा मायावादी साक्षेपमाह—

हं हो दुःशठकर्मकर्मठजरन्मीमांसकः श्रूयतां
सर्वेषामपि वास्तवीं[1] वदसि चेत प्रावाहिकीं नित्यताम्[2] ।
का तर्हि प्रलयोदयश्रुतिगिरां प्रामाण्यसंभावना
तत्प्रामाण्यमृते तवापि च कुतः कर्मक्रियाड़म्बरः ॥ ७१ ॥

सांख्याचार्यस्तु मीमांसकं परिहसन्—

अहो ! जरतः सर्वथा मूलच्छेदीपाण्डित्यप्रकर्षः संवृत्तः । यदयं चोदनाप्रयुक्तोऽपि सर्वोधर्म[3] इति विधिवाक्यबलेन व्यवहरन्नधुना स्वयुक्तियोगेन तत्राप्रामाण्यं प्रतिपादयतीति । ( सर्वे हसन्ति ) ।

अनन्तरमुत्तरमीमांसकमाक्षिप्य नैयायिकः सक्रोधं[4] भणति— हं हो मायावादिन् !

यन्नो दृग्विषयो गिरां न सरणौ नो वा मनोगोचर-
स्तच्चेत् ब्रह्म तवास्ति ये तव मृताः किं तेन सन्तीदृशाः ।

[5]तेन रे वालिशापसद !

श्रुत्यर्थान् पृथगिरयन्निगदतोऽप्यस्मद्विधां लङ्घयन् ।
शून्यं ब्रह्मतया दिशन् प्रतिपदं राज्ञा न दण्ड्योऽसि किम् ॥ ७२ ॥

तदनु वेदान्ती परिहसन्नाह— अरे हैतुक, वृथायुर्व्ययहेतुभूतहेत्वाभासगुणनिकया किमिति जन्मान्तरीयशार्गलीं योनिं संचिनोषि ? पुनर्मीमांसकः[6]—हं हो,

का माया प्रकृतिः क्व ते गुणमयी कर्त्तेति कोवेश्वरः[7]
कुत्रस्ते जगतां शुभाशुभमयं कर्मैव सर्वप्रदम् ।

---

1. ग, ङ—नित्यतां
2. ग, ङ—वास्तवां
3. ख—सवोधर्म
ग, ङ—प्रयुक्तोऽर्थो धर्म
4. ङ—भङ्ग्या सक्रोधं
5. ङ—कैनरे
6. ङ—पुनर्मीमांसकः प्रत्येकं सर्वानाक्षिपति
7. ग, ङ—क्षित्यादि कर्त्तेश्वरः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तर्केषा क्वनु वा कियद्वितनुते किं किं न कीदृग्विधं
दुर्बुद्धे तद्दते परं मृगयसे[1] किं रे जगत्कारणम् ॥ ७३ ॥

[ तदनु सांख्योऽपि संक्षेपेणाह—

तृतीयक्षणमासाद्य यद्ध्वंसप्रतियोगी तत् ।
भवानिव जड़ं कर्म कस्मै किं दातुमर्हति ॥ ७४ ॥ ][2]

अथ वेदान्ती सिद्धान्तकोटिमुपदिशन्[3] नैयायिकाय हितमुपदिशति—

शुद्धं बुद्धं वस्तुमात्रानुविद्धं सत्यं नित्यं चैकमेवाद्वितीयं
इत्थं ब्रह्मश्रौतमूर्द्धानुसारो[4] ज्ञात्वाभ्यस्यन् वत्स मुक्तिं प्रतीच्छ ॥ ७५ ॥

तदनु हैतुकः ( पुनः किमहो अस्मदभिमतघटत्वादिजातिलक्षणं ब्रह्मलक्षणमिति वेदान्ती ब्रूत इति विमृश्य सानन्दम् )—

पाणिं पाणौ घट्टयन्नट्टहासं कृत्वा प्रोचे ब्रह्म चेदीदृशं ते ।
इत्थं शश्वज्जातिमालोचयद्भिः किं [5]नातीर्णस्तार्किकैर्मुक्तिमार्गः[6] ॥ ७६ ॥

इत्युक्त्वा नैयायिकेषु कोलाहलोत्तरं परिहसत्सु[7]—

विद्या—( असहमानः सन् ) प्रिये ! पश्य—

युक्ता युक्तिबलेन हैतुकमृगा[8] वेदान्तिनां दन्तिनां
सिद्धान्तोपरि दुर्घटां विदधते कीदृक्कटाक्षच्छटाम् ।
ते तु स्वाननकन्दरोद्गतमहावेदान्तवाक्यावली—
शुण्डादण्डविमर्दकूर्दलितान् क्षिप्यन्ति दूरेण तान् ॥ ७७ ॥

---

1. च—पथं
2. ग, ङ—Omit the bracketed portion.
3. ग, ङ—अथ वेदान्ती सिद्धान्तद्वारा ब्रह्मस्वरूपमुद्दिशन्
4. च—मूर्द्धाभिसारी
5. क, घ, च—नाचीर्ण
ङ—नातीर्णस्तानि
6. च—योगः
7. च—परिहरत्सु
8. ङ, च—मृषा

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तदनु तेषां कोलाहलं श्रुत्वा वेदान्ती ब्रूते—अहो, ब्रह्मनिष्ठानामपि[1] दुष्परिहरं प्रारब्धं-कर्म हेतुवादिभिर्भुज्यते ये परमाणुमात्रप्रयोजनशून्ये तर्कमार्गेऽप्येतादृशमभिनिविशन्ति ।

तच्छ्रुत्वा सात्वतपुङ्गवो ब्रूते—किमुक्तं भो भोः ! किमुक्तम् ?

देहाद्यारम्भकं यत्तदपि न विदुषां क्षीयते कर्मजालं
मायावादे निरूढा मतिरिति सुचिरं मन्यतां मन्यतां वः ।
सत्सङ्गाद्रोप्यमाणा भगवति बहुधा कर्ममर्मोपहन्त्री[2]
भक्तिर्नो भक्तबन्धौ झटिति वितनुते शूद्रमप्यध्वरार्हम् ॥ ७८ ॥

तदनु वेदान्ती सानन्दं तद्वचनमभिनन्द्य ब्रूते—सात्वतर्षभ सात्वतर्षभ ! भक्तेरनिर्वचनीय-शक्तेर्न किंचिद् दुष्करमस्ति । तथापि[3] प्रारभ्य नष्टस्य प्रारब्धकर्म्मणः कथं नाशः कर्त्तुं शक्यते । नष्टाङ्कुरितस्य बीजस्य नाशः कर्त्तुं केनापि शक्यते । तस्य स्वतएव नष्टत्वात् । तेन तादृशभक्तेस्तथा[4] संस्काराधायकमहिमत्वमिति चेत् सर्वमनवद्यम् । तन्मध्ये च भगवदग्रे भगवत्स्तोत्रापदेशेन स्वमतं दर्शयन् कश्चिद् यतिपतिः[5] सर्वान् श्रावयन्निवाह—प्रभो भगवन् !

त्वं निःसङ्गो विहरसि परानन्दविज्ञानरूपी
मायायोगाद् यमयसि विभो भूजलादीनि चान्तः ।
त्वं सूत्रात्मा भवसि भुवने सूक्ष्मसृष्टि[6]प्रणेता
स्थूले चास्मिन् वपुषि यमिनं स्त्वां विराजं भणन्ति ॥ ७९ ॥

पुनरपि स्वरूपमुद्घोषयन् पुरुषत्वेन स्तौति—

अन्तर्बहिर्गगनवन्न विलिप्यसे त्वं
चिन्मात्र एवहि भवान् सदसत्स्वरूपः ।
त्वं जाग्रदादिनि पुरत्रितये शयालु[7]-
स्त्वं चिन्त्यसे निखिलयोगिजनैस्तुरीयः ॥ ८० ॥

---

1. क—असि
2. ख, घ—बीजकूट प्रारब्धकर्मणांमूलच्छेदिनी
( पुस्तिकाटीका )
3. क—यथाहि
4. ङ—शक्ते तथा
5. ख—क्षितिपतिः
6. क, ख, घ—दृष्टि
7. ख—शयानुत्सं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

मूर्तामूर्त्तं द्विधा ते वपुरभिदधते वादिनो वावदूका-
स्तेषां सिद्धान्तकोटौ स्फुरति कृतधियां नेतिनेतीतिवादः ।
नाना पश्यन्ति केचिज्जगदिदमखिलं मोहिता मायया ते
प्रायः सच्चित्स्वभावान् त्वदिनरदखिलं नेह नानास्ति किंचिन् ॥ ८१ ॥

अनन्तरं पूर्वोपक्रान्तं जगत्कारणवादं विवर्त्तवादमालम्ब्य सिद्धान्तयन् ब्रह्मस्वरूपं निर्वक्ति । किं च प्रभो—

आद्याविद्यानुबन्धादिह जगति निजं जीवभावं वितन्वन्
द्वैताधीनेषु जाग्रत्प्रभृतिषु पुरुषोऽभासि गिङ्गन् पुरेषु ।
कूटस्थोऽसङ्गवच्चिद्वपुरपि[1] जगतो भ्रान्त्यधिष्ठानभूत-
श्छिन्ने द्वैतप्रपञ्चे स्फुरसि हृदि परं त्वं निषेधावधिर्नः ॥ ८२ ॥

( इत्थं भगवद्वन्दनपरतयैव सिद्धान्तमावेदयति यतिपतौ सर्वेऽपि परस्परमुखनिरीक्षणपराः परापरविदस्तस्य पुरस्तूष्णीं बभूवुः । )

लीला—नाथ ! किं नामासौ यतिपतिः ?

विद्या—न जानासि ? शङ्करानन्दतीर्थाभिधानो जीवन्मुक्त एष यतीन्द्रः प्रारब्धं प्रतीक्षमाणश्चङ्क्रमतीति ।

( अनन्तरं सर्वेऽपि उपवनान्तरमासाद्य क्वचित्पल्वलोपान्ते विशश्रमुः । )

लीला—महाभाग !

तपनातपतापतापितानामशनायोरुपिपासयार्दितानाम् ।
इह पश्य जलान्तिके[2] जनन्यः पृथुकानां[3] पृथुकाशने घटन्ते ॥ ८३ ॥

तदनु यात्राकोलाहलपूर्वकं श्रीनन्दिघोषरथचक्रकेङ्कारं भूयस्तरां निशम्य पुनर्जिगमिषालला लीलावतीं विद्यार्णवः प्राह—प्रिये !

तपति तपनस्तीव्रस्रोतैर्नभोन्तरमाश्रितो
भवति[4] विरलः संचारोऽयं नृणामपि वर्त्मसु ।

1. ग, ङ—कूटस्थोऽसङ्गसच्चिद्वपुरपि
2. क, घ] ख, च]—जनान्तिके
3. क—पृथुकाशनां
4. ङ—भगवति

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

ज्वलति सिकताज्वालाजालैर्दिशां मुखमञ्जसा
तदिह तरणौ शान्ते कान्ते विधेहि समीहितम् ॥ ८४ ॥

( इत्युक्त्वा यात्राभ्रमणपरिपाटीनिःसहतया[1] लीलावती भूमौ चेलाञ्चलमास्थाय कुत्रचित्तरुच्छाये स्वपितिस्म । )

विद्या—( अहो, यात्रायां सा[2] लीलावती खिद्यते इत्युक्त्वा ) सखे ! त्वयापि क्षणं विश्रम्यतामिति प्रतीहारमादिश्य स्वयमपि तत्र तथा शिश्ये । एवमेवं चिरं शयानयोरनयोर्दिननाथश्चरमाचलचूलचुम्बी संवृत्तः[3] ।

इतिश्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजिकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
चतुर्थः परिच्छेदः ।

---

1. ङ—निः मरतया
2. क—यात्रायासात्
3. ङ—समृत्तः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# पञ्चमः परिच्छेदः

तदनन्तरं प्रतीहारी—

सखे ! उपस्थिता सायन्तनी सन्ध्या । तदुत्तिष्ठोत्तिष्ठ माभिनिर्मुक्तो[1] भवेति विद्यार्णवमुत्थापयामास । स चोत्थाय लीलावतीमुत्थापयन् कोककारण्डवकुमुदपुण्डरीकषण्डमण्डितपल्वलोपकण्ठे क्षणं विश्रम्य दिननाथमस्तंगतमनुशोचति प्रिये ! पश्य—

येन प्रागुदितेन सौरभवती राजीवराजी कृता
येन प्रोषितचक्रवाकरमणीतापो विदूरीकृतः ।
येनोत्सार्य तमस्तति जगदपि प्राकाश्यमासादितं[2]
सोऽयं शैलतले पतन् रविरहो केनापि नालम्बते ॥ १ ॥

लीला—( सानुतापम् ) नाथ ! अनाथमिव दिननाथमस्तमितमवेक्ष्य प्रकाशितवैराणि कैरवाणि उद्भिन्नमुखतया स्मयन्त[3] इव ।

विद्या—( श्रुत्वा ) हा धिक्, हा धिक्, किं श्रुतम् !

दीर्यन्ते भूमिभागा गिरिगुरुदृषदो जर्जरीभूय भूयः
शीर्य्यन्ते यत्प्रतापान्मृदुलदलभृतां का कथा भूरुहाणाम् ।
तस्योद्दामप्रचारद्युतिङ्मरभरैः[4] प्लुष्टतामिस्रसृष्टैः
कष्टं लज्जावहः किं न भवति सवितुः कैरवे वैरभावः[5] ॥ २ ॥

प्रती—सखे ! एषोऽपि—

कोकी[6]मुज्झति शोकशङ्कुविकलामारून्नमूर्च्छागमां
पृष्ठे पङ्कजिनीं करोति सहजां नापेक्षतेऽपि प्रभाम् ।

---

1. क—अभिनिर्यक्तो
2. ग, ङ—प्राकाशमासादितम्
3. क—सूयन्त
4. ख—द्युतिभरङ्मरैः
5. क—वैरभावः ( वेगः )
   ख—वैरबन्धः
   घ, ङ—वेगः only
   च—वैरीभावः
6. च—कोकां

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्राचीं प्राक्करसात्कृतां न गणयत्यालम्बतं[1] नाम्बरं
जज्ञे सत्पथविच्युतो दिनमणिर्हा वारुणीशीलनात् ॥ ३ ॥

लीला—( सकौतुकविस्मयम् ) नाथ !

यदा यद्यल्लोके सरसिजभुवा निर्मितमहो
विनायत्नं तत्तद्भवति हि तथा न त्वितरथा[2] ।
यतः पारावारे विधिविहितनानाविधमणी-
महाकोषागारे द्युमणिरपि दूराद्रुपनतः[3] ॥ ४ ॥

विद्या—प्रिये ! अहं शङ्के--

परकृतपरिभावं भाविनं[4] भावयित्वा
विधुकिरणहतानां प्रेयसां पङ्कजानाम् ।
कथमपि पुनरेषां रक्षणं नेक्षमाणः
पयसि पतति सिन्धोः पद्मिनीप्राणबन्धुः ॥ ५ ॥

प्रती—( साश्चर्यम् ) सखे ! एष खलु—

कमलपटलीह्रासोल्लासं महान्[5] कुमुदाकरे
विसृमरमहाशोकं कोके चकोरचमत्क्रियाम्[6] ।
नयननिहितालोकालोकानुलूक[7] विलोचने
प्रविशति पयोराशिं भास्वान् विधाय विधातृवत् ॥ ६ ॥

विद्या—प्रिये ! कौतुकमालोक्यताम्—

दिशिदिशि मुदा धावद्गव्याजोऽतिरजस्वलां
दिनपतिपुरः सन्ध्यां व्यक्तीकृतारुणिताम्बराम् ।

---

1. ख—न्यालम्बतं
2. ख—न त्वितरम्
3. क, घ—दूरादुपनतः
4. च—भाविनं
5. ग, ङ—मुदा
6. ग, ङ—चिरन्ययाम्
7. च—लोकाद्दुलूक

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

परिहसति किं संपश्यन्ती रवेन पिलुप्रसू[1]-
रिति कुमुदिनी भृङ्गारावच्छलेन हसन्मुखी ॥ ७ ॥

इत्युक्त्वा लीलावतीमवलोक्य विहस्य पल्वलोपान्ते चक्रवाकमिथुनादिकं किंचित् सन्ध्यावृत्त-मातताना ।

प्रती—( चक्रवाकमिथुनं पुरो वियुक्त[2]मवधार्य[3] ) सखे ! अद्य किल—

नष्टे दुर्दैवयोगादिव[4] दिवि सवितुर्मण्डले रज्यमाने
सर्वानन्दैककन्दे मृदुलकरतया[5] राज्ञि नैवाभ्युदीते[6] ।
सन्ध्यामुत्सार्य्य वन्ध्या[7]मिह विहगकुलैर्हन्त[8] रोरूयमाणं
संजातश्चक्रवर्त्ती प्रकृतिमनुगतः कोऽप्यसौ विप्रयोगः ॥ ८ ॥

विद्या—( सत्यं साधुनिरूपितमिति प्रशंस्य जगद्ध्वान्ताक्रान्तं निरीक्ष्य ) अहो, कथं भगवन्निकटे गमिष्याम इति चिन्तयति ।

लीला—नाथ ! इह गाढ़ान्धकारे कुत्र किं कुर्मः ।

विद्या—सखे ! क्षणादिह—

च्छिन्नं वा वियदापतज्जलधिना किं वा जगत्प्लावितं
कोकीशोकहुताशधूमकलिकाः[9] किं वा दशैता दिशः ।
रन्तुं वा रजनीजनी परिदधे नीलं निचोलाम्बरं[10]
ध्वान्तं[11] वा परितः प्रसर्पति मया किंचिन्न[12] निर्णीयते ॥ ९ ॥

प्रती—सत्यमाह महाभाग ! तथा हि—

---

1. ख—सायंसन्ध्यापितृप्रसू इत्यमरः ( पुस्तिका टीका )
2. ङ—बन्धुकं
3. क—अवधार्यताम्
4. ख, ग, घ, च—दोषादिव । ङ—दोषादिवि
5. ङ—क्रचतया
6. क—राशि नैवाभ्युद्यते
7. घ, च—बन्ध्यां
8. च—दत्त
9. च—कलिताः
10. क—नानं
11. ग—ध्यातुं
12. क, ख, घ—चोद्यन्न
च—चौद्यं न

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्राय: पर्वतकन्दरेषु बहुलीभूतं नभोमण्डले
संमूर्च्छत्पुनरुक्ततामिव बहच्छायातरूणामधः ।
भूभृद्गुल्मलताटवीनगनदीभेदं समुन्मूलयद्[1]
द्वैतध्वंसमधाद्विनीलमहसा[2] भूमितलेऽन्धं तमः[3] ॥ १० ॥

इत्युक्त्वा शनैः शनैः सर्वेऽपि आरामान्निर्गत्य[4] घण्टापथे गुण्डिचामण्डपोपकण्ठे रथत्रयीमभितो दुर्निरीक्ष[5]मालोकमालोकयामासुः ।

प्रती—सखे ! पश्य—

एताभिः करदीपिकाभिरभितः स्फारैः प्रदीपाङ्कुरै-
स्वच्छस्वच्चन्द्रिकचन्द्रदीपनिचयै[6]र्निस्तन्द्रचन्द्रोदयैः ।
आलोकः क्रियते तथा पथि यथा भूमितले रेणवो
गण्यन्ते[7] किमिहाधिकं दिनदशामासादितेयं निशा ॥ ११ ॥

इत्युदीर्य्य सर्वे संभूय तदालोकनेनैव सुखं गत्वा भगवद्वदनारविन्दसुपमासुधां नेत्राञ्जलिभिर्यथेष्टं पिबन्तिस्म ।

ततः स रात्रीमनुजानुजाभ्यां[8] समं समासादितपादचारः
पुरेव भृत्यैः कमलाधिनाथः श्रीगुण्डिचामण्डपमध्यवात्सीत् ॥ १२ ॥

विद्या—( प्रियाप्रतिहाराभ्यां[9] प्रविश्य भगवन्तमाटोपमण्डपे दृग्विषयीकृत्य प्रियां प्रति )— प्रिये ! निभाल्यतामाटोपमण्डपारभटी ।[10]

प्रती —सखे, किमुच्यते ?

यत्रावासमुपैति सप्तदिवसान् वैकुण्ठलोकेश्वरो
यस्य श्रीः परिचारिकेव चरति प्रीत्यापि नित्यादृता ।
यस्य ब्रह्मपुरःसराः सुरवराः के वा न सेवाविधौ
व्यग्रा जाग्रति कथ्यतां कथमयं श्रीगुण्डिचामण्डपः ॥ १३ ॥

---

1. च—समुन्मिलयद्
2. क, ङ—महसो
3. च—भूमीतलोत्थं तमः
4. ग, ङ—आरामगह्वरान्निर्गत्य
5. क, घ, च—आलोक is omitted
6. ङ—दीपनिपनिचयै
7. ङ—पश्यन्ते
8. ग, ङ—मनुजाग्रजाभ्यां
9. क—प्रत्यहाराभ्यां
ग—प्रतिहारिभ्यां
10. ङ—परिपाटी

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अत्रान्तरे भगवति गुण्डिचामण्डपं प्रति पादचारेण चरति—

चतुराननोऽतिचतुरस्तुवन मुखै-
श्चतुरैश्चतुर्भिरभिधाय चागमान ।
तदनुप्रयाणपुरुषार्थमादधे
स्वहितं नु जानति न के महाधियः ॥ १४ ॥

किं च—

श्रीमन्तौ द्वावेकदा[1] पुष्पवन्तौ ध्वान्तध्वंसैः[2] पाटवं दर्शयन्तौ ।
तत्पार्श्वस्थौ मुक्तकालव्यवस्थौ तत्राकार्ष्टां[3] दोहदं भक्तिवल्लेः ॥ १५ ॥

अपरं च—

तस्य पुरस्तात् पवनः प्रसूनवर्षं च सौरभाकर्षम्[4] ।
तनुतेस्म भावबन्धं[5] कमपि तदङ्घ्रिद्वये तत्सम्बन्धम्[6] ॥ १६ ॥

अन्यच्च—

तत्रागत्य व्योमभागे निषण्णो दत्वा शीर्षे[7] पाणिपाथोजयुग्मम् ।
शोभालोभी तद्गुणाकृष्टचेताः काव्यः काव्यं नव्यमाविश्चकार ॥ १७ ॥

पुनश्च—

सार्द्धं सुरेन्द्ररविनन्दनवारिनाथ-
भूतेशवैश्रवणगण्मुखवह्निदस्रैः[8]
वाचस्पतिर्विरचयन वचसां विलासान्[9]
वाचा कया न शुभगं भगवन्तमस्तौत् ॥ १८ ॥

अपरश्च—

वैरञ्चोऽपि विपञ्चीं स्कन्धे कुर्वन् कृतालापः ।
[10]गायन्नगायदुच्चैस्तत्वमसीत्यादिवाक्यानि ॥ १९ ॥

---

1. ग, ङ—तावेकदा
2. क, ख, घ—ध्वंसे
3. ङ—तत्राकार्षं
4. ग, ङ—प्रसूनवर्षी च सौरभाकर्षी
5. क—तनुते स्वभावबन्ध
6. ग, घ, ङ—द्वयेऽतित्सम्बन्धम्,
7. क—शीर्ष्णो
8. च—वन्दितस्तै
9. ख—विनासान्
10. च—गच्छन्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तदानीं च—

भक्त्युद्रेकं भक्तबन्धौ दधाना
वाणी वीणावादनेऽभूत् प्रवीणा ।
के के देवा वाऽस्य[1] सेवावकाशं
हित्वालस्यं लालसां नाध्यगच्छन्[2] ॥ २० ॥

अथ सर्वतः परिवर्त्तनपरिश्रमातुरो विद्यार्णवः प्रियया सह सहसा वासमुपेत्य[3] गुण्डिचोत्सववर्णनाभिनिवेशेन विद्रावितनिद्रो यामिनीं यापयामास ।

प्रातः[4] समुत्थाय च पल्वलान्ते
स्नात्वा च कृत्वा विधिवद्विधेयम् ।
द्रष्टुं जगन्मोहनमन्दिरेशं
तौ गुण्डिचामण्डपमभ्ययाताम्[5] ॥ २१ ॥

विद्या—प्रिये ! अद्येन्द्रद्युम्नसरसि स्नात्वा ततो नीलकण्ठनृसिंहयोर्दर्शनसंपदं संपाद्य तदनु भगवन्तमालोकयाम इत्युक्त्वा इन्द्रद्युम्नसरोऽभ्यर्णे निषण्णः । प्रिये ! इदं किल—

इन्द्रद्युम्नाभिधानक्षितिपकुलमणेर्वाजमेधाङ्गगव्या-
कोटिक्ष्माकुट्टनोद्यत्खुरपुटपटलीखातमुत्खातपङ्कम् ।
तद्धालाफेनमूत्रैरमलजलकुलैः[6] पूरितं तेन पूतम्
सारं संसारचक्रे सरसमिह सरः सेव्यतां सारसाक्षि ॥ २२ ॥

किं च—

स्नानीयवस्तु[7]रहिता त्वमिहाद्य तीर्थे
पानीयमात्रमवगाह्य लुनीहि पापम् ।
आनीय किंचिदपि दुर्विधमादरेण
दानीयमाशु वितरात्र च किंचिदस्मै ॥ २३ ॥

इत्यभिधायोभावपि दम्पती तथा कुरुतः ।

---

1. ग, ङ—के वा देवास्तस्य
च—केवा देवा अस्य
2. ङ—नाधिगच्छन्
3. क—समुपेत्य
4. च—ततः
5. ङ—यायात्
6. क—अमर जलकुलैः
7. ग—वस्त्र

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रती—सखि लीलावति ! इतः कौतुकमालोक्यताम्—

क्वचन पतितमग्रे पिच्छिलारोहणान्ता-
दपि कृतकरतालं केचिदुच्चैर्हसन्ति ।
क्वचन ददति दानं दुर्गतेभ्योऽवतेभ्यः[1]
क्वचन सुतनुमुण्डान् मुण्डिनो मुण्डयन्ति ॥ २४ ॥

( ततो नीलकण्ठेश्वरस्य प्रासादे प्रविश्य साष्टाङ्गं प्रणिपत्य )—

अशेषाकुण्ठमहसे श्रीवैकुण्ठस्वरूपिणे ।
नवाब्द[2]नीलकण्ठाय नीलकण्ठाय ते नमः ॥ २५ ॥

( इति प्रणम्य प्रासादाद्वहिर्भूय नृसिंहनाथपुरतोऽभ्येत्य कृताञ्जलिः प्रणिपत्य )—प्रिये ! एष हि—

नानाशाखोपगूढागमविषमपथानन्तकान्तारवीथी-
सञ्चारी चारुचारी चकितरिपुघटाचित्तशारङ्गशावः ।
पायान्निध्यानधाटीध्वनितदशदिशाभ्यन्तरो मामपायात्
भक्तांहः[3]संघमत्तद्विपकुलदलनोद्दामसिंहो नृसिंहः ॥ २६ ॥

तदनु महाविमर्दशालिन्यपि गुण्डिचामण्डपे वेत्रमात्रप्रहारिणा प्रतीहारिणा[4] प्रवेशितौ तावपि—

नत्वा नत्वा दण्डवद्भूमिभागे
स्तुत्वा स्तुत्वा वाग्भिरेवोचिताभिः ।
दृष्ट्वा दृष्ट्वा श्रीपतेः श्रीमुखाब्जं
हृष्ट्वा हृष्ट्वा कां दशां नाभ्युपेतौ[5] ॥ २७ ॥

प्रती—( विद्यार्णवमाहूय ) सखे ! अद्य किल भगवद्विरहदूनाया रमादेव्याः सकाशात् प्रियसखी विमला भूत्वा काचिद् वाराङ्गना प्रहितास्ति । तदेहि अन्तिकचरीभूतास्तत्संवादं शृणुमः ।

विद्या—वाढमित्युक्त्वा सर्वेऽपि भगवदन्तिकमायाताः ।

---

1. ग—दुर्गतेभ्यो वलेभ्यः
2. ङ—नवाद्य
   च—नवाल
3. ख—भक्तां भः
4. क—परिहारिणा
5. क, ख, घ, ङ, च—नाभ्युपेतः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विमला—देवाधिदेव कमलाकान्त !

या[1] त्वन्नानावतारेष्वियमवतरति त्वत्स्वरूपा च लोके[2]
या ते वक्षःस्थलस्था क्षणमपि विरहं कल्पकल्पं मिमीते ।
तामद्य ब्रह्मशर्वप्रभृतिभृतिकृते जाग्रतीमब्धिकन्यां
हित्वा यस्यां रिरंसुर्भवसि सुभग सा गुण्डिचा का वराकी ॥ २८ ॥

तदनु जगदीशपादमूले सन्निहितो भवन् कश्चित् परिचारको जगदीशो भूत्वा विमलायितां तां पृच्छति—विमले ! देव्याः कुशलं कच्चित् ?

विमला—देव्याः कुशलेन भगवतः किं प्रयोजनम् ? तथा हि- चिन्तयतु[3] चेतसा देवः ।

यत्पादप्रवणाः प्रसादनकृते ब्रह्मेन्द्ररुद्रादयो
यामन्तर्वहसे हृदा वहिरिव प्रेमातिभूमाकुलः ।
सा भूपामरपामरप्रभृतिभिः प्रायः प्रभो प्रस्तुतां
यात्रामत्र रथे निविश्य भवतः किं प्रेक्षितुं न क्षमा ॥ २९ ॥

देवः —सखि ! किमर्थमेवमुच्यते ?

विमले विचिन्तय चिराय चेतसा
　　मम मन्दिरं न किमु शैलकन्दरम् ।
परिहृत्य तत्तु निखिलैर्गिहास्तितुं
　　यदि युज्यते सुतनुगुण्डिचाकृते ॥ ३० ॥

विमला—( श्रुत्वा अन्तः कोपाटोपेन वेपमानापि वहिः सस्मितं प्राह ) भगवन्नशेषनाथ !

तद्विज्ञाप्यं ममास्ते किमपि भगवतः पादपाथोजमूले
चित्ते चेत् तावकीने प्रविशति न पुनः कोऽपि कोपावकाशः ।
तत्तादृक् नीलशैलोदरकुहरकुटीकन्दरं मन्दिरं चे-
देकाकीन्यब्धिकन्या किमनघ भवतो युज्यते तत्र हातुम् ॥ ३१ ॥

---

1. ख—यावन्न
ङ—त्वां नानावतारे
2. ग, ङ—त्वत् स्वरूपानुरूपा
3. च—चिरयतु
4. च—मुदा
5. क—तं
6. ग—तापावकाशः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

देवः —( श्रुत्वा स्मित्वा मुखे वसनाञ्चलमाधाय सावहित्थम् ) विमले ! तर्हि भगवत्या कथमवस्थीयते ?

विमला—भगवन् ! भगवत्या अवस्थानजिज्ञासया किमिति क्षते[1] क्षारमर्पयसि ?

देवः —सखि ! किमिति वृथा दुःखितान्तःकरणा खिद्यसे ?

विमला—( साकूतम् ) प्रभो ! प्रभूणामेतादृशमहोत्सवप्रस्तावे मादृशी का वराकी खिद्येत ?

देवः —वृथा अस्थाने शङ्कामङ्कुरयसि ।

विमला—देव ! अस्थाने स्थाने वा भवतु भगवदाज्ञावशाद्दोषपरिहाराय देव्या अवस्थानं दिङ्मात्रेणोद्दिशामि । तद्यथा— प्रभो ! संप्रति तस्याः --

'हा'रावो वदनाम्बुजे कुचतटे पत्राणि पङ्केरुहां
गण्डे पाणितलं तथा नयनयोर्बाष्पाम्बुधाराभरः ।
तल्पे पल्लवकल्पितेऽङ्गलतिका कण्ठोपकण्ठेऽसवो-
बालाया भवतः[2] क्षणोऽपि विरहे कल्पान्तकोटीकृतः ॥ ३२ ॥

किं चाद्य [3]समागमनसमये स्फुरितस्फूर्जथुं गर्जितोर्जितं घनाघनं निरीक्ष्य [नः सख्या][4] यदभिहितं तच्छ्रवणावधि श्रावणाम्बुधारायमाणाया मम नयनाम्बुधारायाः निग्रहे भवदनुग्रह एवावग्रहो भवितुमर्हति ।

देवः --विमले ! कीदृशं तत् ?

विमला---आज्ञाप्यते चेन्निवेदयामि । तद्यथा--

वज्रं तावकमस्ति चेत्किमु न मे पत्युर्मनस्तादृशं
त्वं चेद्गर्जसि तर्जयन् मम न किं प्रोद्यन्ति काकूक्तयः ।
त्वं चेन्मुञ्चसि जीवनं जलद रे[5] मुञ्चामि तच्च क्षणा-
द्धन्तुं हन्त दुरन्त मादृशि जने कोऽयं तवाडम्बरः ॥ ३३ ॥

( इत्युक्त्वा मुक्तकण्ठं रोदिति )।

देवः —( सनिर्वेदम् ) विमले ! तर्हि अतिभूमिमासादितो भगवत्याः प्रेमपवनसंधुक्षितो विरहानलः ।

1. क—ते
2. ग—भवति
3. ङ—समागमन
4. क, ग—Omits it
5. ङ—जलधरे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विमला—अथ किम्।

देव:—विमले ! त्वय्यपि कथं संगोपयामि संप्रति दुरवस्था ममापि तादृशी ।

विमला—( अन्तः कुपितेव- नाथ ! किमधिकमाज्ञाप्यते ? मया तु सर्वं प्रत्यक्षीकृतमेवेति सोल्लुण्ठनमुक्त्वा सास्रम् ) भगवन् ! प्रियसखीप्रेमातिरेकवशंवदहृदया निर्लज्जेव भूयो विज्ञापयामि।

लुठन्ती भूपृष्ठे कमलदलसंच्छन्नहृदया
वहन्ती वाष्पाम्भोभरभरितमक्षिद्वयमियम् ।
वदन्ती काकूक्त्या प्रियदयितनाथेति वहुशो
विना त्वां कञ्जाक्षी कथमिव निजासून् कलयते[1] ॥ ३४ ॥

देव:—विमले ! पूर्वं भक्तिपरवशेन मया भक्तियुक्ताय इन्द्रद्युम्नाय वरो दत्तः—राजन् ! तव गुण्डिचामण्डपे सप्तदिनान्यतिवाह्य गन्तव्यमिति । तेनाद्य पञ्चदिनान्यतीतानि । यथा कथंचिद्दिनद्वयं सोढव्यमिति भगवती विज्ञापितव्या ।

विमला—धिक्कष्टं, अनिष्टहेतुरेवायं भगवत्याः प्रेमानुबन्धः ।

देव:—विमले ! प्रेम्णो व्यासज्यवृत्तित्वेन भगवत्या इदमुच्यते[2] । भगवतेत्यभिधीयताम्[3] ।

विमला—( सकोपम् ) भगवन्निखिलेश्वर ! मया त्वेवं प्रत्यक्षालापः[4] कर्त्तुं न शक्यते ।

तथाहि—

प्रासादः परिचीयते न भवता किं नाथ तत्तादृशो
भुज्यन्ते न किमत्र भोगनिचयाः सर्वत्र[5] पूर्वाधिकाः ।
किं नाध्यायि च चन्द्रचन्दनमयीचर्च्चाविभूषाम्बरै-
रेवं चेदभिधीयतां भगवतः किं हीयते तामृते ॥ ३५ ॥

देव:—यत्त्वया निगद्यते तत्सर्वं शीतोपचारत्वेन मयिक्रियमाणमपि दुःखकरमेव[6] संपद्यते । तथाहि—

हारा भारायमाणा वनमिव सदनं शीतभानुः कृशानुः
प्रायः प्रायः प्रतीके फणिगणगणनां धारयन्ति स्रजोऽपि ।

1. ङ—कलयिता
2. ङ, च—इति निमुच्यते
3. ग, ङ—भगवतोरित्यभिधीयताम्
4. ग, ङ—प्रत्यक्षापलापः
5. च—पूर्वत्र
6. घ, ङ—दुःखाकरमेव

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

पङ्कोऽप्यातङ्कदायी मलयजजनितो वायुरायुःप्रमाथी
[1]जायापाये जनानां सुखकरमखिलं दुःखहेतुः किमन्यत् ॥ ३६ ॥

विमला—( किंचिद् विश्वस्य[2]) नाथ ! यदेवमुच्यते तर्हि तस्या अवस्थामनवगम्येव । सा हि विविधकष्टोपजुष्टतया प्रतिदिनमपचीयमानकनकवल्लरीप्रतिम[3]लवणिममात्रावशिष्टगात्रयष्टि-निरीक्षणापचित[4]बहुलपक्षचतुर्दशीचन्द्रकलाविषयकशङ्काशताङ्कुरितपरिवेदितपर[5]परिजना[6] क्षणं नयति ।

किं च, तपसमय[7]तपनातपतापोपतापितशुष्यत्तर[8]तरुवरनिकरगिरिकन्दरतटाटवीप्लोप-कर्मकर्मठविपिनशिखावच्छिन्नखासहस्रमध्याध्वनीनझंझानिलकोटिदूरवापनिजोष्मवैभव[9] निरर्गल-नासापुटपथनिर्गलच्छ्वासानिलकर्कशसंपर्कमात्रपरिणत[10]जम्बुफलप्रतिविम्बीभवदधरविम्बफला-वलोकजनितचिन्ताकुलमादृशसहचरीकुलक्रियमाणशीतोपचारापि[11] खिद्यते ।

अनवरतरतिपतिशवरशरोपबृंहित[12]विकसितसव्यनयनारविन्दमरन्दविन्दु[13]सन्दोह-सुन्दरतरमन्देतरवाष्पभर[14]मिलनोच्छलदितर[15]लोचनाम्बुभरभरितपाणिपङ्केरुहमध्यहिण्डमान-हिण्डीर पिण्डपरिपाण्डरगण्डमण्डला उपतप्यते ।

किं च, प्रतिभित्तिभाग[16]सुरशिल्पिकल्पशिल्पिशतकल्पितानल्पविचित्रचित्रोत्कीर्णभवन्-प्रतियातनावलोकनयापितविरहयातनापि त्वद्वदनसुधाकर तादृशमाधुरीसुधारसास्वादनध्यानपरा[17] कुलितहृदया[18] मुहुरुत्ताम्यति ।

---

1. च—छायापाये
2. ङ—विहस्य, च—विमृश्य
3. क,ख,घ—प्रतिमल्ल
   च—धृतमल
4. क, ङ, च—निरीक्षण क्षणोपचित
5. ख—परिवेदित परि
   ग, ङ,—परिदेवनपर
   च—परिदेवित
6. ङ—परिगृजना
7. क—तपसमया
8. ङ—पुष्यत्तर
9. क—वैत्तव
10. घ, ङ, च—Omit 'परिणत'
11. क, च—शीतोपचारात्
12. ग, ङ—शबरशशोपबृंहित
13. क—Reads विद्युत् for 'मरन्दविन्दु'
14. ङ—वाष्पजल
15. ङ—मिलल्लोचनादित
16. ख—भारः
17 ग, ङ—ध्यानधारा
18. क—कलितहृदया

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च, पुरा त्वत्करुणालोकनतौष्टिक[1]कर्माकृष्टप्रमोदपूरपूरणप्रतिदिनोपचितप्रतिप्रतीकापि संप्रति [2]खलजनवचनकृतभवदनादरच्छिन्नमार्गनिर्गतसम्मदभारशिथिलावयववेदनावहल[3]मानवती सा नवविरहता[4]मधिकमातनोति ।

किं च, निरवच्छिन्नधारावाहिवहन्नयनाम्बुपूरदूरप्रक्षालनप्रक्षालितनिद्रामुद्रेव नागरवरसागर-नन्दनाजागरणैव[5] रजनीं यापयति[6] इति निवेद्य भगवच्चरणारविन्दान्तिके देव्या लिखितं लेखमदात्[7] ।

देवः—(सादरं गृहीत्वा पठति)

तादृशगोपीसंचयचञ्चकमधुराध्वनीन[8] कंसारे ।
एकस्याः कस्याश्चिन् त्यागं तेनाति[9]दुष्करं मन्ये ।। ३७ ।।

(इति पठित्वा स्मयमानः सन्)—विमले ! तर्हि भगवती स्वस्वरूपानभिज्ञा सती प्राचीन-वृत्तान्तेनैव[10] खिद्यते (इत्युदीर्य्य क्षणं स्वयं विचार्य्य देव्यन्तिके पत्रिकामालिखति ।) तद्यथा—

देवि !

रेखा काञ्चनकाञ्चनीव निकषे नव्याम्बुवाहोदरे
निस्पन्देव तडिल्लता स्फुरसि मे या नित्यमेवोरसि ।
सैषा चेद् विरहं ममाद्य मनुषे तर्तिक[11] न सम्भाव्यते
चन्द्रश्चन्द्रिकया शिखी[12] च शिखया हीयेत दैवादिति ।। ३८ ।।

किं च प्राणेश्वरि !

एकः कश्चिन् स्फुरति यदि नौ सच्चिदानन्दभाव-
स्तन् किं नाहं भवसि[13] सुभगे किं न वाऽहं त्वमस्मि ।
ऐक्यादेवं यदसि न कृता सङ्गिनी[14] गुण्डिचायां
तं चेद्दोषं गणयसि तदा क्षम्यतां मेऽपराधः ।। ३९ ।।

---

1. क—तौण्ठिक, ङ—नैण्ठिक
2. क, घ—कलजन
ख—क्लिजन
च—कर्ण जपजन
3. क, घ, ङ, च—व्वेदानवहर
ख, ग—व्वेवदनावहर
4. ग, ङ—नवविरहाता
क,ग,घ,ङ, च—Add one 'नव?' after this
5. घ, ङ—जागरणैव
6. ग, ङ—गमयति
7. क—लेख्यमदात्
8. ग—मधुराध्वनीन
9. क—तत्राति
ख—तनोति
10. ङ—वृत्तान्तमात्रेणैव
11. ङ—रचितं
12. ङ—शिखा
13. ङ—भवति
14. ग—सङ्गिनी

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

इति लिखित्वा विमलाकरे पत्रिकां ददाति। तदनु विमला तां गृहीत्वा प्रभुं प्रणम्य गत्वा देव्याश्चरणान्तिके ददाति।

देवी—(पत्रिकां वाचयित्वा मुहूर्त्तमुन्मनायमाना विमलां प्रति) सखि विमले ! सापराधा अपि प्रभवो न लंघनीया इति भणामि[1]। अप्रकटमपि गत्वा भगवन्तमवलोक्य तद्वदनसुधाकर-सुधावलोकनेन क्षुधिते इव लोचने सुखयिष्याम इति।

विमला—स्वामिन्या सम्यक् मीमांसितमिति देवालयाद् वहिः सपरिकराः सर्वा निःसरन्ति।

प्रतीहारी—सखे विद्यार्णव ! अद्य भगवत्पत्रिका[2]पठनानन्तरमेव देवी भगवन्तमप्रकाशितमवलोकितु-मायास्यतीति घण्टापथे महती यात्रा भवित्री[3] किल तदेहि पश्याम इति सर्वेऽपि वहिरगुः।

विद्यार्णवः—(प्राचीरमुल्लंघ्य दूरादालोक्य) सखे ! कोटिकोटिचन्द्रदीपिकालोकेन[4] रोदसी प्रदीपयन् क एष समायाति ?

किं च—

आकाशान्तर्नितान्तं पटुपटहरवः प्रायशः प्रोज्झिहीते
निर्ह्लादेनात्मनो दिङ्मुखमतिमुखरं झर्झरी चर्करीति।
ढक्का काप्यध्वनीयं ध्वनति घुमुघुमु ध्वाननिर्भिन्नकर्णा
भेरीभाङ्कारपुरः प्रसरति परितो[5]दूरतः किं न विद्मः ॥ ४० ॥

प्रती—सखे ! एष खलु गजपतियात्रां कारयितुमद्य निष्क्रान्तः।

विद्या—(पुनरन्यतोऽवलोक्य) सखे ! सहस्रहस्त[6]परिमितवारवामापरिवारितशिविकामारूढः स्वल्पान्धकारे पथि क एष समायाति ?

प्रती—सखे ! देवी समागत्य परिचारिकामुखेन गजपतिं भर्त्सयति। तदेहि गत्वा शृणुमः।

---

1. क—भवामि
   घ—भमामि
2. च—लेखन
3. ग, ङ—भवति
4. ग, ङ—लोकनेन
5. क, च—पुरतो
6. घ, ङ, च—Omit 'हस्त'

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

परिचारिकाः—( राजानं प्रति संरब्धाः सत्यः )

> शून्ये तादृशि मन्दिरे विरहिणीं संस्थाप्य नः स्वामिनीं
> यात्रां काचन[1] तन्वतैव भवता[2] देवो गृहं त्याजितः ।
> इत्थं गर्जनतर्जनैर्बहुविधैर्निर्भर्त्स्य वारस्त्रियो
> लक्ष्मीपक्षतया हठाद् गजपतेश्छिन्दन्ति चेलाञ्चलम् ॥ ४१ ॥

तदनु कोलाहले प्रवृत्ते भगवती कमला[3] सम्मर्दशालिनि[4] जगन्मोहनमन्दिरे जोषं प्रविश्य भगवन्तमवलोकयन्ती—

> भर्तुः पुरो ज्वलित[5] सप्तशिखप्रदीप-
> नीराजनाधिगमकोपकषायिताक्षी ।
> कन्यां किमेष[6] परिणीय न कांचिदन्यां
> नीराज्यते धिगिति मानवती प्रतस्थे ॥ ४२ ॥

तदनु सर्वाः परिचारिकाः समेत्य कोपाटोपकम्पमानमानसाः पथि प्रभुवरस्यन्दनं भङ्क्त्वा[7] [ विपथ एव देवीं गृहीत्वा गृहमुपययुः । तदनु दिनद्वयानन्तरम्—

> सुभद्राबलभद्राभ्यां देवो देवीदिदृक्षया
> प्रतस्थे रथमारोढुं पादचारेण पूर्ववत् ॥ ४३ ॥

प्रनी—सखे विद्यार्णव ! निजप्रेयसीं ][8] पराङ्मुखीभूय[9] निर्गतां निशम्य प्रणयपरवशो भक्तबन्धु-भगवान् तदनुनयायैव प्रासादं प्रति प्रत्यावृत्य प्रतिष्ठितः[10] ।

तदेहि विलोकयाम इति निष्क्रामन्ति ) ।

---

1. ङ, च—काचन
2. क, ख, ग—भगवता
3. ग—कमलालया
   ङ—कमलया
4. ग—सम्पच्छालिनि
   घ—सम्मर्दनशालिनी
5. क, ख, ग, घ, च—ज्वलति
6. क, ख, ग—किमेव
7. क, ङ—भक्त्वा
   ग—भङ्क्त्वा प्रणम्य
8. क—Omits the bracketed portion
9. क—विपथीभूय
10. ग, ङ—प्रत्यावृत्तः प्रतिष्ठते

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—सखे ! भगवति रथारूढे प्रतिष्ठमाने—

माद्यन्तोऽत्र चतुर्विधं विदधते[1] वाद्यानि विद्याधराः
व्योमान्तः सुरगायका मुररिपोर्गायन्ति गेयं यशः ।
गानातिप्रमदोद्धुरा[2] सुरपुरीनारी नरीनृत्यते
कीदृक् न ध्वनयत्यमन्दमवनीमामामुलूलुध्वनिः ॥ ४४ ॥

किं च—

चक्रं [3]नक्रशिरोऽपहारि कलयन शङ्खं च बाहुद्वये
दीनानाथकुले कृपाम्बुकिरता[4] नेत्राञ्चलेनाञ्चितः ।
किं कुप्यन्प्रमदा[5]प्रसादनकृते[6] देवाधिदेवः प्रभुः
घण्टानादपुरःसरं विजयते द्रागेष घण्टापथे ॥ ४५ ॥

एवं क्रमेण वलिमण्डपातिक्रमेण भगवतिसमीपमागतवती विमला नाम सखी कमलामवादीत्—देवि सकलाधीश्वरि ! जलधिनन्दिनि ! रथायं घण्टानादकरम्बितप्रचक्रम उत्तम[7]रथचक्रचक्रविकटतरकटकटाराव[8]संमूर्च्छितो जयजयारावः सार्वजनीनः क्षणं क्षणं सन्निहिततमः श्रूयते तद्वैमि तवाद्य विरहावस्था दुरवस्था नेव[9] । तदेहि समागममण्डपे स्थित्वा प्रभोर्यात्रासंपदमालोकयाम इति मिलिताः सर्वाः सख्यः कमलां पुरो निधाय सायं समये सिंहद्वारि नृसिंहरथोपरि निदधुः ।

तदानीं च यथाविधि विधिज्ञैः परिचारकैर्देवयोः प्रस्थानप्रस्तुते[10] विमला भणति—सखि कमले ! पश्य पश्य—

किं निद्राति रिरंसुहंसमिथुनं स्निग्धेन्द्रनीलस्थले
निष्क्रान्ताविह किं सुरासुरगुरू प्रत्यग्रपाथोधरात्[11] ।
कालिन्दीसलिलोदरे विकसितं किं पुण्डरीकद्वयं
कैरेवं भगवन्मुखे द्विनयनीमुद्वीक्ष्य नोत्प्रेक्ष्यते ॥ ४६ ॥

---

1. च—वितनुते
2. ग, ङ—कानाति प्रमदोद्धुरा
3. क,ख,ग,घ—वक्र, o'हारि' is retained as o'हारी' violates the metre.
4. क, घ—किरणं
5. ग, ङ—कमला
6. च—प्रमदानुरञ्जन कृते
7. ग—प्रचक्रतमरथचक्र
घ—प्रचक्रमतम
ङ—प्रचक्रितिमरथचक्र
च—प्रचक्रमत्तं
8. ग—रावः
ङ—इव
9. च—वेद
10. ङ—दर्शन प्रस्तुते
11. क—पाथोदरात्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रसन्ना नाम सखी प्राह—सखि अरविन्दमन्दिरे भगवति इन्दिरे[1]—

प्रत्युप्तोद्दीप्त[2]सप्ताङ्कुरमुकुटमणि[3]स्तोमनानांशुधारा-
शैलाम्रोदम्रजाम्रत्स्थिरतरचपलाद्योतविद्योतितश्रीः ।
एषा कोटीरकोटी शिरसि मुररिपोः[4] श्रावणाम्भोदघाटी-
सृष्टं[5] स्पष्टोपसृष्टं[6] मणिधनुरिव ते पापराशिं[7] लुनातु ॥ ४७ ॥

अनन्तरमालम्बा[8] नाम सखी वदति—अयि जगज्जननि ! जलनिधिनन्दिनि[9] !

विभ्राणोऽदभ्रमाद्यद्भ्रमरचयचितां चूलिकां काञ्चिदेकां[10]
दोर्दण्डद्वन्द्वशुण्डाद्वितीयशुभगतारम्भसंरम्भशाली ।
दैन्यादन्यानपेक्षं पथि पथि हरिणा साधुसंसेव्यमानो
जीयादत्यद्भुतश्रीस्तव विपदटवीवारणः[11] कश्चिदेष[12] ॥ ४८ ॥

तदनु वञ्जुला नाम सखी मञ्जुलाक्षरं भणति—सखि, पङ्केरुहाङ्कवासिनि !

मध्यं पश्याघहन्तुर्यमनियमयुजां यत्तचित्तेऽवलग्नी-
भावाल्लोकेऽवलग्नाह्वयमयमयते[13] मुष्टिमेयोऽप्यमेयः ।
[14]यद्गात्रोत्पीतचेलोपरि परिकलिता हाटकी[15] पट्टिकेयं[16]
सन्ध्या भ्राम्यन्तरस्था [17]चलतमविलसद्विद्युदुद्योतमेति[18] ॥ ४९ ॥

(इति भूयो भूयः प्रणमति ।) तदनु कस्तूरीका नाम सखी प्राह—सखि कमले[19] ! मनोरमे भगवति रमे !

---

1 क—नन्दिरे
2. क—प्रेत्युग्रोद्दीप्त
3. ग, ङ—शिखरमणि
4. ङ—मरभिदः
5. क—स्पृष्टं
6. ङ—स्पष्टोपदिष्टं
च—स्पष्ट स्पष्टोपसृष्टं
7 ङ—पाप राशिं
8. ग—अनन्तरमालम्बा
च—आलिम्बा
9. ग, ङ जलधि
10. ङ—चूलिनां कांचिदेनां
11. ङ—वारिणः
12. क—कश्चिद्देवः
13. क—त्त यमय मयते
च—अवलम्बाह्वयमयमयते
14. ग, ङ—यत्रोद्यत् । च—यद्गाढो
15. क—हटिकेयं
16. च—पष्टिकेयं
17. ङ—चलित
18. च—विन्दुरुद्योतमेति
19. ग, ङ—सकल

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विष्णोर्वक्षःस्थलस्थः कनकमयमहाशृङ्खलादामलम्बी
स्वर्णानद्धस्तरक्षुच्छिन्नखयुगजीग्रगसंग्रग्रिस्पृग्[1] ।
दृष्टिं व्यावर्त्य मत्यन्निजदिशि ददतः[2] सैष धत्ते हृदीति
व्यक्तं वक्तीव[3] [4]वक्रोर्द्ध्वगशिखरतया कोऽपि भूषाविशेषः ॥ ५० ॥

अथ नवमालिका[5]नाम सखी प्राह—सखि पद्मसद्मनिवासिनि[6] ! निरीक्षसे कश्चित्[7] ?

तापिच्छान्तद्विपङ्क्तिस्थितितिमिरचयद्योत[8] खद्योतभासो
मध्ये[9] प्रालम्बिकाया दनुतनुजरिपोर्गापदालम्बितायाः ।
निष्काणां निष्प्रकम्पा ततिरतिचतुरा[10] किं नु शोभामलोभा
रत्नाख्यैरक्षिलक्ष्यैः प्रभुवर[11]सुषमामीक्षते दुर्निरीक्षाम् ॥ ५१ ॥

ततो भगवती कमलापि[12] प्रभुवरकुण्डलद्वन्द्वमालोक्य सविनयं भणति । भो सख्यः—

आमुक्तानां मणीनां किरणगणमिषादन्तरुज्जृम्भमाणं
कारुण्याम्भः[13]प्रवाहं दिशि दिशि किरति भक्त[14] सन्तापशान्त्यै ।
आन्दोलच्छद्मना[15] ये श्रवसि मुररिपोर्मद्दशां वक्तुकामे[16]
यातायातं विधत्तः सुरत[17] कृतधियः कुण्डले माधवीये ॥ ५२ ॥

अथ सर्वा अपि साधु कमले साधु साध्विति भगवद्भक्तियुक्तां भगवत्या भक्तिं स्तुवन्ति । पुनरपि कमला साधूनुपदिश्य सखीकुलमुपदिशति[18]—हं हो !

---

1. ङ—पृष्ठ संधुष्टि सृष्टः
2. क—ददति
3. क, च—व्यक्तीव
4. ङ—वक्त्रो
5. ङ—नवमालिनी
6. घ—पद्मे पद्मनिवासिनि
   ङ—पअसअे
   च—सखि पद्मे, पद्म सद्म निवासिनि
7. ङ—किश्चिन्
8. ग—द्योति
   ङ—ज्योति
9. ग—मदभे
10. ग—दियभति रुचिरा
    ङ—ततिरति रुचिरा
11. ङ—सुगमा
12. क, ख, घ, च—Mss. Omit 'कमलापि'
13. ख—लावण्याम्भः
14. क, ङ—भक्ति
15. ङ—आन्दोलद्धअना
16. ङ—वक्तुकामो
17. क, ग, घ, ङ—स्मरत
18. ङ—मुपदिशन्ती

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रतिकर्मकृते भवद्भिरेवं[1] यदयं निष्कपटैः स्वमादकारि ।
तदवेक्ष्य हरौ बुधा भवन्तो[2] न कथं निष्कपटत्वमावहन्ते ॥ ५३ ॥

किं च—हे सख्यः !

सुषमकुसुमैः क्लृप्ता सेयं विभोः सुषमासरित्
त्रिदशसुमनोवृष्ट्या[3] दिष्ट्या [4]विवृद्धिमुपागता ।
हृदयलतिकां छित्त्वा सद्यो ममाद्य रसोच्छ्रयात्
प्रमदजलधौ गाढावर्त्ते निपातयति स्फुटम् ॥ ५४ ॥

इति जगदीशमुखारविन्द[5]विलोकनविजृम्ममाणस्मरशवर[6]शरव्यताजनितविकारशतसंगोपनाक्षमा सती भगवतीन्दिरा सखिभिः समं मन्दिरान्तरमगात् ।

विधा—( सम्यक् तदानीमवधार्य ) प्रिये !

यस्मिँल्लोकोत्तरेयं निवसति[7] चपला चापलं दूरयन्ती
यस्मिन् गारुत्मतं किं कलयसि न पुनः सन्निवेशं विशेषात् ।
मुक्तानां यत्र वासः सततमुदयते साधुसादृश्यभाजां
कुण्ठं[8] वैकुण्ठमेनं सखि विमृश मृषावादलोपेन[9] भर्तुः ॥ ५५ ॥

अनन्तरं जगदीश्वरोऽपि—

भुक्त्वा[10] भोगान्[11] मुक्त्वा[12] भरणकुलमलं सुन्दरं[13] स्यन्दनान्ता-
न्मन्दं प्रस्यन्दमानो[14] दयितपतिकर[15] न्यस्तहस्तावलम्बः ।
अग्रे भद्राग्रजाभ्यामसितगिरिगुहां पादचारं चरद्भ्यां[16]
पद्मायाः पद्मवक्त्रेक्षणचलितमनाः[17] सद्मने संप्रतस्थे ॥ ५६ ॥

---

1. ग—भवद्भिरेवं
2. ग—मुधा भवन्तो
ङ—सुधाभवन्तो
3. ङ—दृष्ट्वा
4. क, ङ—विवृद्ध
5. च—सुखानुविद्ध
6. च—शर
7. च—न वसति
8. क—दोषं
ग, ङ—कण्ठं । च—कुण्ठां
9. ङ—वादालोपेन
10. ङ, च—भक्त्या
11. क—भोग्यान्
12. ग, ङ—समुक्त्या, च—समुक्ता
13. घ, ङ, च—सुन्दरः
14. ग, घ, ङ, च—प्रस्पन्दमानो
15. च—परिकर
16. क—पादचारचरद्भ्यां
ग—पदचारं चरन्त्याः
17. ङ—क्षणचलितमनाः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तदानीं भगवति जगन्मोहनमुपगतवति[1] वञ्जुला नाम प्रगल्भा काचन परिचारिका भगवत्या भगवतिप्रेमसंरम्भसंदर्शनाय किमत्र रे भवतां[2] प्रयोजनमस्तीति प्रभुवर-परिचारकान सभ्रूभङ्गमाक्षिपन्ती[3] महसा निजमन्दिर[4]द्वारकवाटपुटद्वयमघट्टयन ।

अथ मुरहरभृत्यै वातकृत्यै[5] विनत्या
विरचितबहुदैन्यं याच्यमाने प्रवेशे ।
सपदि जलधिपुत्री प्रेमनिक्षेपगात्री[6]
प्रणयकपटरीत्या काचिदित्याचचक्षे[7] ॥ ५७ ॥

तदेवाह—

मुरहरपरिवाराः[8] केन रे दुर्निवाराः
विघटयत कवाटं घट्टितं नः प्रयत्नात् ।
चलत[9] मिलत सद्यो गुण्डिचामण्डपं वः
कथयत[10] किमिह श्री[11] मन्दिरे कृत्यमस्ति[12] ॥ ५८ ॥

( पुनरपि कुपितेव निवारयन्ती )

घण्टां दूरयताखिलां त्यजत रे दुर्वारकोलाहलं
ढक्कां धिक्कुरुताधुनैव शयने निद्राति नः स्वामिनी ।
सैषा कुप्यति चेन् क वः प्रभुरयं[13] कुत्रास्तु यात्रामहो
यूयं चापि कुतस्ततोऽतिनिभृतं निर्यात पर्यायतः ॥ ५९ ॥

अनन्तरं जगदीशायमानः कश्चिद् विनयोत्तरमुत्तरं ब्रूते—अयि वञ्जुले !

---

1. ग, ङ—जगन्मोहनमन्दिरद्वारमुपगतवती
2. ङ—भगवतां
3. ङ—सभङ्गमाक्षिपन्ती
4. ङ—Omits 'द्वार'
5. क—वार्द्दकृत्यै
6. ग, ङ, च—पात्री
7. ङ—त्याचचष्टे
8. ङ—परिचाराः
9. ङ—चलति
10. ङ—कथयति
11. ङ—स्ता
12. ग, ङ—कृत्यमास्ते
च—त्यक्तमस्ति
13. क—प्रभुरियं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विज्ञाप्या भवतीश्वरी[1] मम गिराप्यादाय पादद्वयी-
माप्र्व्येऽनार्प्यनिषेविते पथि वृथा त्वं मानसं मा कृथाः ।
या याः सन्ति गृहे गृहे युवतयस्तासामपि श्रीजुषा
चित्ते चिन्तय चारुचन्द्रवदने[2] का कान्तमास्कन्दति ॥ ६० ॥

तच्छ्रुत्वा वासन्तिका नाम सखी साक्षेपमाह[3]—हंहो भगवत्परिचारकाः, स्वदोषमगणयन्तो भवन्तः परानेवमेव बहुवक्तुं जानन्ति । शृणुत रे !

के लोके गृहिणो[4] गृहेषु गृहिणीं गृह्णन्ति नात्यादृताः
के वा तां[5]परिहृत्य[6] शून्यमदने नानोत्सवान् तन्वते ।
जानीमः परवञ्चकाः[7] कलियुगे युष्मद्विधा दुर्विधाः
निर्दोषे घटयन्ति दोषपटलीं पश्यन्ति तां नात्मनः ॥ ६१ ॥

किं च रे—

तत्तादृग् धार्ष्ट्यमत्रापि[8]धृष्टानां वो न युज्यते ।
गुण्डिचामण्डपं तेन प्रतियात यथागतम् ॥ ६२ ॥

पुनः सापि—( अलं क्षुद्रैः सह वैरायमाणत्वेन[9] इति परिचारकतर्जनां[10] विहाय भगवन्तं प्रति सामर्षम्)—देव !

[11]नृत्यन्त्यप्सरसोऽपि यत्र शतशो[12]गन्धर्वकन्यार्बुदं[13]
यत्रोद्गायति यत्र यात्रिककुलैः प्रारम्भि कोलाहलः ।
वाद्यं यत्र चतुर्विधं विदधते ते चित्रसेनादयो
यत्रोच्चैः सुमनोभरैः सुमनसो वर्षन्ति हर्षाकुलाः ॥ ६३ ॥

---

1. ङ—जगदीश्वरी
2. घ, ङ, च—चन्द्रचारुवदने
3. ग—साकोपमाह
4. च—गृहिणीं
5. ग—के वालां
   च—के वाचा
6. च—परिदृग्र
7. ङ—परिवञ्चकाः
8. ङ—मतापि
9. च—वैराग्यमाणत्वेन
10. च—परिचारकजनान्
11. क—कृत्यन्त्य ०
12. ग—गान्धर्व
13. ब—कन्यावुर्दिम

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

सोऽयं चित्रचरित्र नैव भवतः श्रीगुण्डिचामण्डपो-
भ्रान्त्या चेन्मिलितोऽसि तत्कथमितो घण्टापथं भ्राम्यसि ।
[1]यत्राक्रन्दरवो यदश्रुकलितं[2] तद्दुर्भगामन्दिरं
ज्ञात्वैतद्भगिनीं करेण कलयन् तत्र प्रयाहि प्रभो ॥ ६४ ॥

देवः—(तच्छ्रुत्वा) भगवति हृदयानन्दिनि[3] जलनिधिनन्दिनि[4] !

किमिति निरपराधे दोषमारोपयन्ती
रचयसि मयि रोषं[5]कोपने[6] कोऽपराधः ।
विमृश मनसि विज्ञे तूर्णमाज्ञापयैनं
तव चरणसरोजे किङ्करः किं करोतु ॥ ६५ ॥

तच्छ्रुत्वैव ताः ससंभ्रमं मिलिताः सख्यो मिथो विचारयन्ति—अहो सख्यः ! देवीं पराङ्मुखीमवगत्य यद्यैव भगवता निराकृतस्तादृग्गुण्डिचामहोत्सवोऽवधारित[7]मेव रथयात्राकुतूहलं अनादृतैवाटोपमण्डपारब्धभोगारभटी दूरीकृत एव इन्द्रद्युम्ननृपतौ चिरन्तनस्तादृशः प्रसादः[8] । तन्मन्ये प्रेयसीप्रेमपरता[9] प्रभूणामपि विषयोपभोगशून्यमवश्यं[10] दैन्यमावहति । अन्यथा परमव्योमनाथस्य गोलकेशितुः श्वेतद्वीपाधिपतेर्वैकुण्ठभर्त्तुरप्यस्य शठशवरादिसुलभ[11] गुहागृहमात्रोपलब्धये किमीदृशी दैन्योक्तिः संभाव्यते[12] । (इति देव्यां देवस्यानुरागातिशय[13]-मवधार्य्य झटिति कवाटमुद्घाटयन्[14]कवाटोद्घाटमवेक्ष्य ।)

मल्लैस्तदानन्दभर[15] प्रफुल्लैर्देवीपुरस्तादिव सौविदल्लैः[16] ।
निधाय देवं सदनान्तराले नीराजनारम्भविधिर्व्यधायि ॥ ६६ ॥

---

1. च—तौर्य
2. क, घ, ङ, च—कलिलं
3. क—हृदयानन्दिक
4. घ—जलधिनन्दिनि
5. घ—रोषं
6. ङ—कोपने
7. क—अवधारित
   ख—अवधारितो
8. च—प्रसादः
9. ग—प्रेमपरताप, ङ—परमता
10. ग, ङ—विषयान्तरोपभोगशून्यमगम्यं
11. ङ—गृहा
12. ग—सम्भाव्येत
13. ङ—रागातिरेक
14. ङ—कपाटो
15. क—० त्तर
16. क, घ—सौविदल्लैः

अथ जय जय घोषो निःसरन्नेकशेषो
निखिलजनमुखेभ्यो ब्रह्मलोकावगाहि ।
भगवति भगवत्याः प्रेमसंरम्भवत्याः
स्फुटमवददिवेदं सौमनस्यं रहस्यम् ॥ ६७ ॥

तदनु दनुजहन्ता हन्त कान्ताननान्ते
नयननलिनकोणं[1] तिर्यगामज्य किञ्चित् ।
परिजनपरिपाट्या प्रस्थितो मन्दमन्दं
न्यविशत[2] शितिशैले[3] साधु सिंहासनान्तः ॥ ६८ ॥

ततस्तु नानाविधमनोरथशतसंकल्पपूर्वकविहितानल्पप्रणामा रजनीपरिणामान्नानादिगन्तवासिनो[4] लोकोत्तरवासिभिः[5] सह जिगमिषव आसन् । तदानीम्—

सम्मर्दादिकमेव[6] केचिदपरे वेत्रप्रहारव्यथां
केचिद्भोजनमिष्टमभ्युपनतं क्षुत्क्षामतां चापरे ।
शंसन्तो हृदि गुण्डिचां निदधतः के के न देवादयोऽ[7]-
निच्छन्तोऽपि परस्परं समगमन् स्वं स्वं पदं यात्रिकाः ॥ ६९ ॥

अथ प्रभाते पुनरभ्युपेत्य विद्यार्णवः प्राणसमानुषङ्गी[8] ।
सिंहासनोल्लासिनि नीलशैले दृष्ट्वा जगद्बन्धुमभून्मुदान्धः[9] ॥ ७० ॥

विद्या—सखि लीलावति ! एष खलु[10] कोटिपरिमितावतारमूलहेतुर्यदुकुलकेतु[11]र्निःसंशयं परिचीयताम् ।

लीला—नाथ ! नीलाचलनाथरूपिणो यदुनाथस्यावतारान् शुश्रूषुरस्मि ।

विद्या—प्रिये ! परार्द्धकोटिपरिमितायुषापि केन साकल्येन भगवदवतारवर्णनं सुशकम्[12] ?

---

1. च—कोणं
2. क—न्यविशति
3. ग, च—शितशैले
4. क, घ—दिगन्तवासी
   ख—दिगन्तवासिभिः
5. ख—Omits the word
   घ, ङ, च—लोकान्तरवासिभिः
6. ङ—संमर्दादिन
7. ख—केनापि देवादयोः
   ङ, च—के वा न देवादयोः
8. क—प्राण समानसङ्गी, च—प्राह समानुषङ्गी
9. क—मुदामुदान्धः
   ङ, च—मभून्मदान्धः
10. ङ—Omits 'एष खलु'
11. क—हेतु
12. ख—सकलम्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तथापि त्वदुत्कण्ठाकुण्ठत्वहेतवे[1] केचन निर्दिश्यन्त इत्युक्त्वा दशावतारस्वरूपोल्लेखेन स्वाभीष्टं प्रार्थयन् भगवन्तं स्तौति। तद्यथा—

धत्ते चित्ते न वारिव्यसनमुपनतं[2] यो न दीने च भूष्णु[3]-
र्यश्चातीतस्तथोर्मीन[4] मनसि न वहते जातु चिद्भङ्गभीतिम्।
यं नैवान्तभ्रमोऽपि भ्रमयति[5] परवल्लिप्यते यो न पङ्कैः
दासोल्लासं स धत्तां वहिरपि भुवनाम्भिःसृतः कोऽपि मीनः॥ ७१॥

दैतेयैरादितेयान्[6] जलनिधिमथने साधु संधाय[7]गूढं
विभ्राणः पृष्ठनिघ्नं गुरुगरिममहाकन्दरं मन्दरं यः।
[8]उत्पाद्यासाद्य सद्योऽमृतमथ दितिजान् स्तम्भयन्भ्रू विजृम्भै-
र्देवानेवाशयद्यः स तु मम सततं शर्म निर्मातु कूर्मः॥ ७२॥

पुनश्च—

यो धातुर्घ्राणरन्ध्राद्बहिरजनि पुराङ्गुष्ठदघ्नस्ततोऽभून्
रिङ्गन् मातङ्गतुङ्गस्तदनुगिरिवराकारवर्ष्मोपगूढः।
दैत्यं संहृत्य दद्भ्यामुदहरदवनीं[9] यश्च पातालमूलात्
तस्यैवाऽस्य प्रसन्ना भवतु[10] भगवतः शौकरी कापि मूर्त्तिः॥ ७३॥

अपरं च—

येन प्राक्कल्पगर्जोर्जितजलदघटाघोरनिर्घोषधाटीं
धिक्कृत्य ध्यानधारां झटिति जनयता द्रावितो ब्रह्मलोकः।
तारास्तास्ता निरस्ता विधुरपि विधुतो[11] वारिता वारिवाहा[12]
येन प्रोत्सार्य्य पुच्छं स च निजकृपया पातु मां दिव्यसिंहः॥ ७४॥

---

1. क—त्वदुत्कण्ठाकुण्ठहेतवे
   ङ—वहूक्त कुण्ठत्व हेतवे
2. च—उपगतं
3. ग—विष्णु
   ङ—रिष्णु
4. ख—उर्मीनृपापाय (पुस्तिकाटीका)
5. च—येनैवात्र भ्रमोऽपि भ्रम इति
6. क—दैतेयैराहितेयान्
7. ङ—सन्नाय
   च—सन्धाय
8. ङ—तत्पाद्यासाद्य
9. क—दद्भ्यो ०
   च—दोर्भ्यां मुदवहदवनीं
10. क—प्रपन्न नवतु
    घ, ङ—प्रपन्ना नवतु
    च—प्रपन्नान् भवतु
11. ङ—विधुरो
12. क—वारिवाहो
    च—वारिमाहाः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

भूयोऽपि—

यस्तादृग्यज्ञवाटे निगमपटुवटुच्छद्मना सद्म गत्वा
जित्वा दैत्येन्द्रमिन्द्रं व्यतनुत जगती संपदानन्दसान्द्रम् ।
गङ्गा यस्याङ्घ्रिसङ्गाद्विहरति गिरिजाकान्तकान्तोत्तमाङ्गे
यो देवो देवतानां स भवतु भगवान् वामनः पावनो नः ॥ ७५ ॥

किं च—

ब्रह्मब्रह्मर्षिविस्मापन[1] विपुलतपोऽजस्रविश्रामभूमि-
र्यः प्राक् त्रिःसप्तकृत्वः क्षितितलमतनोत्क्षत्रकङ्कालकीर्णम्[2] ।
ब्रह्मण्यक्षात्त्र[3]चर्याद्भुतमहितमहःपुञ्जवन्मञ्जुलश्रीः
सोऽव्यादव्याजभव्यार्च्चितपदकमलो[4] मामसौ[5] जामदग्न्यः ॥ ७६ ॥

किं च—

यस्य द्वेष्यो दशास्यः स्फुरति दशरथो यत्पिता यो दशाशा[6]-
कान्तैः कान्तानुवन्धी दशशतवदनो यस्य पर्यङ्कवन्धः ।
यः सीताविप्रयोगे स्मरति दशदशा निर्दिशत्वं भजन्ते
यद्भक्ताः सोऽद्भुतश्रीर्भुवि मम भविता भद्रकृद्रामभद्रः ॥ ७७ ॥

किं च—

कृष्णामाकृष्य[7] साक्षादकृत कृतधिया येन संकर्षणाख्या
लीने येन प्रपञ्चे स्वयमुदयवता शेषभावोऽप्यदर्शि ।
दध्रे नीलाम्बरत्वाज्जगति समुचितो येन चानन्तभावः
[8]सामर्षोनैकशीर्षा रचयतु स चिरं लाङ्गली[9] मङ्गलं नः ॥ ७८ ॥

---

1. ङ, च—विज्ञापन
2. च—जालकीर्णम्
   ख, ङ—क्षत्रचर्याद्
   च—० भव्यार्जित ०
   क—मानसौ
6. ङ—दशाशः
7. घ—कृष्णा=यमुनमित्यर्थः
8. च—सामर्षो नैव
9. क—Omits 'लाङ्गली'

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अन्यच्च—

दैत्यानत्यादरेण श्रुतिसमयजुषो[1] वीक्ष्यमाणोऽतिदर्पान्[2]
[3]तद्‍द्विभ्रंशहेतुं [4]जिनवृजिनमतं दुःस्थमुत्थापयन् यः।
[5]युक्त्याभासेन तेषामतिकरुणमतिर्मोहयामास चित्तं
शुद्धो बुद्धोऽपि बौद्धाकृतिरमरकृते मां सः पायादपायान् ॥ ७९ ॥

अपरं च—

[6]इन्द्रार्वा [7]खर्वगर्वोत्तरतुरगवरस्फारपृष्ठैकनिष्ठो[8]
म्लेच्छांस्तुच्छानतुच्छच्छविरसिलतया यो दुरन्तान्निहन्ता।
रिङ्गन् प्रत्यङ्गसङ्गोत्कटसुरभिमृदुस्पर्शनस्पर्शलेशात्
कर्त्ता यः कान्दिशीकं कलिकलुषकुलं पातु नः सैष कल्की ॥ ८० ॥

इत्थं भगवतोऽवतारविशेषान् संक्षेपेणोदीर्य्य इदानीं अवतारित्वेन स्तौति।

मत्स्याद्या[9] येऽवतारा जगति तदुदये वीजभूतोऽवतारी
भक्तेभ्यो भुक्तिमुक्ती[10] स्वभजनदृशं[11] यो विविच्य व्यतारीत्।
कुण्ठोत्कण्ठो विकुण्ठे पुरि परमपुमान् गोकुले गोपलीलः[12]
कृष्णः कृष्णानुषङ्गी स्वचरणकमले सैष पुष्णातु तृष्णाम् ॥ ८१ ॥

शश्वच्चिदानन्दघनप्रकारः[13] साक्षात् परंब्रह्म नवावतारः
नानागमाम्भोधिरसैकसारः पुनातु मां गोपवधूकुमारः[14] ॥ ८२ ॥

---

1. ग—श्रुतिसमजुषो
2. क, ख, ग, घ, ङ—० दर्हान्
   च—० तदर्हान्
3. ङ—तत्कृत
4. ङ—जन, च—निज
5. घ—युक्ता
   ङ—त्यक्त्वा
6. क—इन्द्रोर्बा
7. च—सर्व०
8. ग—स्फारपृष्ठैकनिष्ठो
   ङ—स्फारपृष्ठे कनिष्ठो
9. ङ—संपाद्या
10. क, घ—मुक्ति
11. घ, ङ—स्वभजनसदृशं
12. ख—गोपलीनः
13. च—०सदानन्दः०
14. च—गोपालवधूकुमारः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

इत्थं नन्दनन्दनाभिन्नतया नीलाचलमौलिमण्डनं भूयोऽभिवन्द्य[1] तत्पुरतः प्रियया सह तत्र क्षेत्रे चातुर्मास्यनिवासव्रतं संकल्प्य दिने दिने दीनबन्धुमुखावलोकनसुखाम्बुधिपूरदूरमग्नतया विद्यार्णवः सुखमुवास।

इति श्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजिकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
पञ्चमः परिच्छेदः।

1. ख—अभिनन्द्य

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# षष्ठः परिच्छेदः

तत्रान्तरे जलधरोर्जितगर्जितानि
मानापनोदनकृते स्मरतर्जितानि ।
संपादयन् युवजने सहसा विरासीन्
केलीकलारसमयः समयोऽम्बुदानाम् ॥ १ ॥

विद्या—( सकौतुकम् ) प्रिये लीलावति ! पश्य—

धाराभिदुर्द्ग्गाभिस्तपतपनजुषां नन्दयन्तस्तरूणां
प्रोद्यत्खद्योतविद्युत्ततिभिरपि तथा ये[1] दिशां मण्डयन्तः ।
पञ्चेषोः पञ्चबाणाहतिभिरति[2]लुलत्पान्थकान्ताकृतान्तो
[3]दान्तानन्तर्विकुर्वन्निह स विजयते हन्त कान्ते कृतान्तः[4] ॥ २ ॥

इह हि—

आसीद् भङ्गो नदीनामभजदुपचितिं[5] योगिनां योगभङ्गो
यूनां प्रस्थानभङ्गः समजनि जनितो मानिनीमानभङ्गः ।
एतावद्भङ्गशालिन्यपि घनसमये भङ्गिमा भङ्गुरश्री-
र्मुक्त्वा भ्रूभङ्गमेकं क्वचिदपि न परं भङ्गमागादनङ्गः ॥ ३ ॥

लीला—( श्रुत्वा स्मित्वा वैलक्ष्यलक्षितेव ) नाथ ! प्रेक्ष्यताम्—

आसारैः परिपूरितो दरदरीभागास्तडागादयो[6]
रिङ्गत्तुङ्गतरङ्गभङ्गिविषमा नद्योऽपि सद्योऽभवन् ।
स्तोकं स्तोककमण्डली न च दधे [7]तृष्णार्त्तिमुष्णांशुतः
सानन्दं कलयन्ति केकिनिचयाः केकां न के कामपि ॥ ४ ॥

---

1. ख, ङ—यो
2. ङ—रिति
3. ङ—दन्ता
4. क, घ, च—तपान्तः
   ख—तप्यतः
5. ग, ङ—दुपचितं
6. ङ—स्तमागादयो
   च—स्तटाकादयो
7. क—तृष्णार्त्त

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( स्तनितमाकर्ण्य ) प्रिये । निशम्यताम्,

रे पान्था मन्थरत्वं जहित हितधियो[1] यात कान्तान्तिकं वः
स्थातव्यं चेत्तदानीमनुभवत महामत्सरं मत्सराणाम् ।
इत्थं जागर्त्ति यावज्जगति जनहिता[2] मान्मथी काचिदाज्ञा
यामेते वारिवाहा दिशि दिशि कलिता घोषमाघोषयन्ति ॥ ५ ॥

लीला—( स्पर्शसुखमभिनीय, सचमत्कारम् ) नाथ !

मल्लीवल्लीमतल्ली[3] विदलितकलिका[4] मोदपूरापहारी-
लुण्ठाकः[5] केतकालीपरिमलरजसां नीपसौरभ्यचौरः[6] ।
कोपाटोपातिरेकव्यथितवरबधूदत्तचित्तप्रसादो
धत्ते कन्दर्पदर्पप्रसरमनिभृतं मालतीगन्धवाहः ॥ ६ ॥

विद्या—प्रिये ! सत्यमाह भवती । तथा हि—

अस्यां प्रावृषि शेमुषीमुषि नभस्यालोक्य कादम्बिनीं
कादम्बाः कतिचिन्मृताः[7] कतिपये[8] देशान्तरं प्रस्थिताः
तापोत्तप्तवियोगिनीकुलगलच्छ्वासानिलैर्वृहितः[9]
कादम्बः पवनः परं वितनुते पान्थे कृतान्तायितम्[10] ॥ ७ ॥

किं च—प्रिये ! अयं घनागमः पथिकानां सम्वर्त्त[11] एव संवृत्तः[12] । तथा हि पश्य—

एताभिः कालिकाभिर्विततवकतति[13] व्याप्तदंष्ट्रावलीभिः[14]
रोषावेशादिवोच्चैः पथि पथि पथिकाश्चर्विता गर्विता ये ।
रक्ताक्तानीव तेषां दिशि दिशि पिशितानीन्द्रगोपापदेशा-
दालक्ष्यन्तेऽस्थिखण्डान्यपि करकमिषात् सर्वतः संपतन्ति ॥ ८ ॥

---

1. क, ख, ङ, च—हतधियो
2. ङ—जनहता
3. ङ—० वल्लीवतल्ली
4. च—जलका
5. ख—लुण्ठौक, लुण्ठाकः
   च—लुण्ठा कं०
6. क—सौरभू चौरः
   च—सौरभ्य गौरः
7. ग—कचितिन्मताः
8. क—क्रतिपयो
9. च—च्छ्वासानलैः ०
10. ग—कृतान्तायितुम्
11. ङ—संवृत्त
12. च—स्मृतः
13. ङ—विंकतविकतति
14. क, च—व्यात्तदंष्ट्रावल्लीभिः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—नाथ ! एष हि—

स्तिमितशकुनिर्निरस्तराजहंसो
गुरुतटिनीभवभङ्गशालिभीमः
हरिजनितनिनाददीर्णकर्णः
कुरुमभरानुकृतिं दधे तपान्तः ॥ ९ ॥

विद्या—(स्मित्वा)

स्फुरति भुवि समृद्ध[1]मेघनादो धरणिभवाधिकतापशान्तिहेतुः ।
कपिशतरचितक्षणप्रभत्वा[2]द्रघुपतिसङ्गरवत्पयोदकालः ॥ १० ॥

( पुनर्वियति शम्पासम्पात[3]मालोक्य ) प्रिये !

स्थाने गगनाभोगेऽवलम्बि[4]घनैर्यत्तडिल्लतासंगः ।
न भवति चपलाटोपः सत्पथमनुयायिनां केषाम् ॥ ११ ॥

लीला—( सानुभवम् ) नाथ !

अत्र प्रावृट्काले जलदजटाले स्फुरत्तडिन्माले ।
दात्यूहाः प्रत्यूहं दधति नदन्तो हि मानिनीमाने ॥ १२ ॥

इत्थमेव प्रत्यहं प्रतिवेशिनः कुन्तलेश्वरस्य परिचारिकाभिः सह जगदीशावलोकनाय गच्छतोस्तयोः कियत्सु दिवसेष्वतिवाहितेषु एकदा लीलावती विद्यार्णवं प्रासादे परिहृत्य कार्यवशादावासाय सत्वरमित्वरी सिंहद्वारचत्वरे कुन्तलेश्वरसुतायाश्चन्द्रप्रभायाः परिचारिकां मकरिकामवलोक्य पप्रच्छ—सखि मकरिके ! किमित्युद्विग्नेव लक्ष्यसे ?

मकरिका—( निःश्वस्य )सखि लीलावति ! त्वय्यपि किमकथनीयं नाम । चन्द्रप्रभामेव [5]उद्वेगनिदान-मवधारय ।

लीला—( ससंभ्रमम् ) अपि कुशलं चन्द्रप्रभायाः ?

मक[6]—कुशलमकुशलं वा अवधारयतु प्रियसखी ।

लीला—निवेद्यतां निवेद्यताम् ।

---

1. ग—समुद्धत
2. ङ—क्षणप्रभुत्वा
   च—क्षणप्रभावात्
3. ग—शम्पाशत
4. ङ—भोगोऽवलम्बि
5. घ—तद्वेग
   ङ—उद्विग्ना
6. ङ, च—मधुरिका

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—सखि ! एकदा जगदीशदर्शनं संपाद्य प्रादक्षिण्येन पीठदेवतामवलोकनपरायां चन्द्रप्रभायां—

यदवधि विमलायाश्चन्द्रशालाप्रवेशे
समधित मदिराक्ष्या वीरवक्त्रे कटाक्षः ।
रतिपतिशरधाटीधूतधीरव्रताया—
स्तदवधि मम सख्याः का दशां किं ब्रवीमि ॥ १३ ॥

लीला—तर्हि पृच्छ्यसे, स च वीरः किं नामकः किं कुलोत्पन्न इति, येनेत्थं चन्द्रप्रभाया धैर्य्यतरुः समूलमुदमूलि ।

मक—सखि ! स च गजपतिमन्त्रिप्रवरस्य भगवद्भ्रमरवरस्य नप्तागोपीनाथविद्याधरस्यात्मसंभवो यं खलु सकलविद्यानवद्याशयत्वात् विद्याधर इति रसिकोत्तंसत्वात् भ्रमरवर इति पुरुषेषूत्तमत्वात् पुरुषोत्तम इति च प्राहुः ।

[लीला—तर्हीदानीन्तनस्य[1] वीरकेशरिनामधेयस्य गजपतेरायव्ययाधिकृतो महामन्त्री पुरुषोत्तमविद्याधरः ।
मक—अथ किम् । ][2]

लीला—(विमृश्य) चन्द्रप्रभे ! धन्यासि । यतः—

त्रिभुवनयुवधाटीकोटिकोटिरहीरं
तमनुसरसि चेत्किं नासि धन्यासु गण्या ।
गिरिशशिरसि वासं वञ्चयन्त्याः परस्मिन्
क्व खलु शशिकलाया जायतां प्रेमबन्धः ॥ १४ ॥

( इत्थं तदभिनन्द्य )—सखि मकरिके ! कथमेतन्निर्वहेदिति विमूढास्मि[3] ।

मक—सखि ! तद्दिनावधि निरुपायतया चन्द्रप्रभानुज्ञया भगवत्या विमलायाश्चरणान्तिके[4] त्रिसन्ध्यमेवमेव विज्ञापयामः[5] । देवि ! त्वद्दर्शनावसरे त्वत्प्रासादसमीपे स तु लब्ध[6] इति । [7]त्वद्दत्तमेव तं मन्यमाना चन्द्रप्रभा भूयो भूयो भवतीं विज्ञापयति, देवि ! दत्तश्चेदविलम्बेन दीयतामिति ।

1. क, ग, न—तर्हिदानीं तस्य
2. ङ—Omits the bracketed portion
3. च—विस्मृतास्मि
4. ख—चरणारविन्दे
5. ङ—विकाशयामः
6. च—दिव्य
7. क, घ, ङ—त्वद्दतमेव
ख—त्वद्दतमेव

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( श्रुत्वा समन्तोपम् ) सखि ! तर्हि निर्वहेदिति सम्भाव्यते । श्रूयते हि,

पुरा किल रुक्मिण्यादीनां भगवतीचरणोपसेवनप्रमादादभिमतवरोपलब्धिरिति ।

मक—सखि ! सत्यवादिनी भवसि ।

लीला—सखि मकरिके ! प्रथमदर्शने[1] चन्द्रप्रभायाः कीदृशो[2] भावबन्धः संपन्नस्तं शुश्रूषुरस्मि ।

मक—सखि, किं भणामि, तद्दर्शनादेव चन्द्रप्रभायाः —•

द्राङ्नीवी शिथिला बभूव निखिला स्विन्ना वपुर्वल्लरी
स्तम्भारम्भि पदद्वयं कुचतटे कीदृक् न कम्पोदयः ।
प्रादुर्भावमधत्त गण्डफलके रोमाञ्चभूमा ततो
लज्जामज्जनमाप चेतसि चिरं स्वात्मा न किं विस्मृतः ॥ १५ ॥

तदनु च—

सा तेनातिपराङ्मुखी जिगमिषारम्भे ततो भाविनी
मन्दाक्षोदयमन्दमादृशसखी [3]शिक्षाक्षरोपेक्षया ।
उन्मादोन्मुदितान्तरेव निभृतं वक्रीभवत् कन्धरं
व्यावृत्त्यैव मुहुर्मुहुः प्रियतमे नेत्रान्तमासञ्जयत् ॥ १६ ॥

लीला—सखि मकरिके ! अचिन्त्यो हि अनङ्गजमतङ्गजस्य[4] दुराचारोपक्रम यदयमकाण्डेऽपि दण्डमापातयति ।

मक—सखि ! कः सन्देहः ? येन तादृशी चन्द्रप्रभापि महाजनसमक्षमेतादृशी कृता ।

लीला—सखि ! इदानीं तर्हि कस्तव सख्याः कालयापनोपायः ?

मक—सखि ! किं भणामि, यथा कथंचित् ततो निःसृतायाश्चन्द्रप्रभायाः पुनरपि दोलायात्रामहोत्सवे दैवात् [5]परस्परगागानुबन्धबन्धुरस्तस्य यदा दर्शनमहोत्सवः प्रादुरभूत् ततः प्रभृति—

---

1. च—Omits 'प्रथम दर्शने'
2. क—ईदृशो
3. च—दीक्षाक्षरो
4. क, घ, ङ—अनङ्गजनङ्गमस्य
   च—अनङ्गस्य जनङ्गमस्य
5. च—परस्परानुरागबन्धुर

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

निपतति[1] घनसारसारशीते
नवनलिनीशयने निधीयमाना ।
न भवति यदि तत्र शर्मलेशो
लुठति तदा भुवि धूलिधूसराङ्गयाम ॥ १७ ॥

किं च—

रचयति न तु चन्दनं शरीरे
क्षिपति विदूरत एव पुष्पमालाः
घटयति करपङ्कजं कपोले
व्यथयति कामिव मादृशीं न भूयः ॥ १८ ॥

किं च—

न तु भजति सुधाकरे प्रमोदं
न मलयमारुतसंगमीहते वा ।
अवनतवदनैव लक्ष्यशून्यं
प्रलपति केवलमेहि वल्लभेति ॥ १९ ॥

यदि विधिवशतः क्षणं सखीभि-
र्विचरति[2] केलिसरस्तटेषु बाला ।
खगमिथुनसमागमावलोका-
द्दहति[3] तदा स्मरजर्ज्जरं हि चेतः ॥ २० ॥

किं बहुना—

नियमति नयनोदरे न निद्रा
प्रतिदिनमङ्गलतामुपैति शोषः
किमिव धवगवेषणाय[4] तस्या
विचरति कण्ठतटे चिराय जीवः ॥ २१ ॥

1. ग घ, ङ—निपतित
2. क—विरचित, ङ—विहरति
3. —० भवति
ङ—अवलोक्य वहति
4. ग—reads 'च' for 'धव'
च—धन ०

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—सखि ! तर्हि चन्द्रप्रभा अतिसंकटे पतितास्ति । परिपृच्छ्यसे[1], एतादृशानुरागिणी वः प्रियसखी युवजनमौलिमण्डनस्यास्यानुरागलवमवधार्य्य प्रवर्त्तते कश्चित् ?

मक—सखि ! किं पृच्छसि ? तद्दिनावधि स च पुरुषपुङ्गव आहारविहारादिषु निस्पृहश्चन्द्रप्रभाचातुरीमेव वर्ण्णयन् कालं कालयतीति कथितमेव विहङ्गिकया ।

लीला—का पुनर्विहङ्गिका ?

मक—सा च तस्यैव परिचारिका प्रत्यहं मन्निकटमागत्य सर्वं निवेदयति ।

लीला—प्रसन्नं तर्हि भगवत्या विमलायाः[2] ।

मक—सखि ! विद्याधरः पुरुषरत्न मतिप्रयत्नेन चन्द्रप्रभाकटाक्षविक्षेप[3]सौष्ठवद्योतकं पद्यमेकं[4] संपाद्य पुनस्तदेवावर्त्तयन कामयातनां यापयति ।

लीला—मकरिके ! यादृशं तन्जानासि चेन्निवेद्यताम् ।

मक—तर्हि निवेदयामि । तद्यथा—

कविजनमनसो विदूरवर्त्ती खलचरितस्य न चानुभूतपूर्वः[5] ।
शशधरकलयेक्षितुं न शक्यो नृपदुहितुर्दृशि वक्रिमप्रकारः ॥ २२ ॥

लीला—( सातङ्कम ) सखि ! तर्हि चन्द्रप्रभाकटाक्षो विद्याधरस्य मर्माविन्[6] संवृत्तः ।

मक—प्रियसखि ! किमत्र संशेते ।

लीला—सखि मकरिके ! ईदृशी वश्चन्द्रप्रभा कीदृशीति[7] शुश्रूपुरस्मि ।

मक—सखि ! किमुच्यते । तद्रूपलावण्यवर्णनोपक्रमे बृहस्पतेरपि जाड्यमुदयेत्[8] । किं पुनर्मुग्धस्वभावानां मादृशां[9] सुदृशाम्[10] । तथापि चन्द्रप्रभास्वरूपवर्ण्णनाय विद्याधरेण पृष्टाऽहं यथा न्यवेदयं[11] तथा तवापि पुरो निवेदयामि ।

---

1. ग, ङ—परं पृच्छ्यसे
2. क—० कमलया
ग—प्रसन्ना तर्हि भगवत्या विमलता
च—भगवत्या विमलया
3. ग—निःक्षेप
4. ङ—० मेव
5. ङ—चाभूतपूर्वः
6. ग—मर्माभिवत्
ङ—मर्माविसंवृतः, च—मर्मवत्
7. च—कीदृशीवश्चन्द्रप्रभा सौन्दर्ये कीदृशीति
8. ग—मुत्पद्येत
9. च—मादृशानां
10. ङ—omits the word
11. ङ—तदग्रे न्यवेदयम्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—कथं भवती विद्याधरेण पृष्टा ?

मक—सखि ! भवत्येव[1] विद्याधरेणापि पृष्टा । [यथा तस्य[2] पुरो निवेदितं तन्निशम्यताम् ।][3]भो विद्याधर ! बाल्यादपि चन्द्रप्रभाचरितं चित्रलिखितमिव मम चित्ते परिस्फुरति ।

विद्याधरः—सखि ! तर्हि मज्जीवनानुरोधेन तच्चरितमाकुमारमावेदनीयम् ।

मक—यथाज्ञापयति महाभाग इति निवेद्य मयोक्तं महाभाग ! सापि[4]—

पित्रोः प्रमोदविभवं प्रतिपादयन्ती
बाल्यं कुतूहलरसेन कृतार्थयन्ती ।
आलीजनैः सरभसं समुपास्यमाना
चिक्रीड तत्र नवकृत्रिमपुत्रिकाभिः ॥ २३ ॥

विद्या—ततस्ततः ?

मक—महाभाग ! अत्याश्चर्यप्रभावा चन्द्रप्रभा स्वल्पैरेव दिवसैः—

संगीतकर्मणि तथा प्रतिकर्मकृत्ये
स्रग्गुम्फने[5] विविधचित्रकलाविधाने ।
साकूतगीतरचनासु परानपेक्षं
त्वत्प्रेयसी किमपि कौशलमाससाद ॥ २४ ॥

विद्या[6]—मकरिके ! त्वत्प्रेयसीति वदन्ती[7] किमिति गण्डोपरि विस्फोटं जनयति । ततस्ततः ?

मक—( विहस्य ) महाभाग !

---

1. च—त्वय्येव
2. क, घ—तत्पुरो, च—तत्परो
3. ङ—reads the bracketed portion as-
सखि मकरिके ! यथा तथा दर्शनावसरेऽपि झटिति स्मरार्त्तेन मया सम्यक् न निघार्यत इति पृच्छामि । ईदृशी वश्चन्द्रप्रभा कीदृशी निवेद्यता-मिति । इत्थं तेन सदैन्यमभ्यर्थितया मया यथा तत्पुरो निवेदितं तन्निशम्यताम् ।
4. क, च—महाभागस्यापि
5. ङ—तद्गुम्फने
6. ग—विद्यार्णवः
7. घ—वदन्ती भवती
ङ—विदिता भवती
च—वदती भवती

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

इत्थं गतेषु दिवसेषु कियत्सु तेषु
तत्केलिकौतुककथासुरभीकृतेषु[1] ।
तां द्रष्टुकाममिव रूपविशेषलोभा-
दत्रान्तरे किमपि यौवनमाविरासीत् ॥ २५ ॥

विद्या—(स्मृत्वा क्षणमुन्मनायमानः सन्) सखि मकरिके ! तस्यां प्रथमयौवनप्रादुर्भावः[2] कथं त्वयावधारितः ?

मक—महाभाग ! एकदा मया चन्द्रप्रभाचरितमवधार्य चिन्तितम् ।

तत्सूना[3] कियदप्यमन्दमधुरावक्षःस्थलीं नेक्षते[4]
दुर्वारो भजते न चापि विरतिं धूलीषु केलीरसः ।
जल्पन्त्या बहुजल्पिते क्वचिदहो भंगी न चांगीकृता
तस्या यूनिजने तथापि किमिव व्रीडावलीढं[5] मनः ॥ २६ ॥

विद्या—सखि ! एवं वयःसन्धौ वर्त्तमानायास्तव सख्याः प्रकारः सविशेषं वर्ण्यते चेत् किंचिदुच्छ्वसिमि ।

मक—यथा मन्यन्ते महाभागः । महाभाग ! तद्दिनावधि[6]—

केलीषु तासु न बभूव तथानुरागो
बालासु तासु न बभूव तथानुषंगः ।
तस्याः कियत्तरुणिमोदयचुम्बितायाः
जातो यथा सरससंगीतरसाभिलाषः[7] ॥ २७ ॥

[ किं च—

स्थातुं चिरं न पुरतः पितुरीहते वा
मातुः समीपमुपयाति पुरेव नैव ।
एकान्तमिन्दुवदना कुतोऽपि हेतोः
एकान्तवासविषये स्पृहयालुरासीत् ॥ २८ ॥[8] ]

1. ङ—सुरभू०
2. ग—आविर्भावः
3. क, घ—उत्सूना, च—उच्छूना
4. क—नेक्ष्यते
5. क—क्रीडावलीढं
6. क, ख, घ, च—Mss. omit 'महाभाग ! तद्दिनावधि'
7. च—सरससंगीति ०
8. क, ख, घ, च—Mss. Omit the bracketed portion

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—सखि मकरिके ! ततः परं कथमासीदिति निवेद्यताम् ।

मक—ततः —

एकातपत्रमिह धारयतो नृपत्वं
बाल्यस्य वैरि[1] नृपतेरिव निग्रहाय ।
आयास्यतो मदनभूमिपतेः पुरस्तात्
सेनानिवेश इव यौवनमुल्ललास ॥ २९ ॥

विद्या—सखि मकरिके ! जगतविलक्षणेव[2] भवदीया वाक्चातुरी । हुं ततस्ततः ।

मक—तदनु तस्याः —

तारुण्यमात्मसु द्[3] नु गवेषमाणो[4]
लज्जासखीं करतलेऽप्यवलम्बमानः ।
राजात्मजेत्यवगमादिव जातभीति—
जोषं विवेश मदनो हृदयान्तरालम् ॥ ३० ॥

विद्या—तर्हि स्पष्टयौवना[5] सती [6]स्पष्टमदनापि संपन्ना ।

मक—बाढम् । तदानीं पुनः —

पश्चेषुनिर्जितमहीतलमभ्युपेतं
दोःसाधिकं[7] तरुणिमानमवेक्ष्य तस्याः ।
सद्यः स्वचापलधनान्यपि भीत भीतो[8]
हित्वा दृशोः किमु पलायत बाल्यचौरः ॥ ३१ ॥

विद्या—(श्रुत्वा सरोमाञ्चम् ) साधु मकरिके साधु । सखि ! तल्लोचनचाञ्चल्यं बाल्यचौरादाच्छिद्य गृहीतमिति यत्त्वयोत्प्रेक्षितं तत्तथैव । अन्यथा पथि पथि पथिकोपतापिशीलेन तल्लोचनेन वाटपाटच्चरत्वं कुतोऽभ्यस्तम् ।

---

1. ग—बालास्यवेरि
2. ङ—जगदवक्तृविलक्षणेव
3. ङ—तारुण्यमाम ०
ग—तारुण्यमात्मदशं
4. ङ—गवेक्षमाणो
5. ङ—स्पृष्ट
6. ङ, च—स्पष्ट
7. क, ख, च—दोषाधिकं
ङ—दोः साधनं
8. ग—भीतभीतो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—( स्मित्वा )[1] न भवन्तो[2] जानन्ति। कदाचित्[3],

धूलीषु केलिमनपेक्ष्य सखीसमाजं
कार्य्ये प्रतार्य्य विजनं समुपेत्य बाला।
संभोगिचित्रमिथुनानि निभालयन्ती
त्रस्ता[4] विनिक्षिपति दिक्षु निगाय चक्षुः ॥ ३२ ॥

विद्या[5]—सखि ! सत्यम्। लज्जामदनयोः परतन्त्राणां रीतिरेतादृशेव[6]। हुं ततः ?

मक—कदाचित्,

पञ्चालिकापरिणये[7] सहचारिणीना
मानन्दमन्थरमहो हृदयं वहन्त्या
वैवाहिके[8] शयनकर्मणि तत्र क्लृप्ते
कोऽप्युत्सवो भवति पङ्कजलोचनायाः ॥ ३३ ॥

विद्या—(तदेकतानहृदयः क्षणं चिन्तयित्वा निःश्वस्य) मकरिके ! ततः ?

मक—कदाचिदपि—

केलिप्रसङ्गमवरोधननागरीणा-
मन्यत्र दत्तहृदयेव शृणोति बाला।
तत्रालिभिः शिशुतया विहितेऽन्तराये
धत्ते भृशं मनसि विप्रकृतेव रोषम् ॥ ३४ ॥

विद्या—सखि मकरिके ! इत्थं यौवनेन मदनसात्कृतायास्तव सख्याः चेष्टाविशेषं निशम्य अवस्थाविशेषं[9] जिज्ञासुरस्मि।

---

1. क, ख, घ—omit the word
2. ग, ङ—तद्भवन्तो
3. ङ—Inserts 'विद्याधरः—ततस्ततः' before 'कदाचित्'
4. च—तत्रा
5. ग—विद्यार्णवः
6. ग—भीतिरेतादृश्येव
7. ङ, च—पाञ्चालिका०
8. च—वैवाहिकं
9. क—omits 'निशम्य अवस्थाविशेषं'

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—तदानीम्—

गाम्भीर्यमाप हृदयं सुदृशः स्वरेण
　　श्रोणीतटेन सिनयः प्रथिमानमूहे[1] ।
नेत्राञ्चलेन वचनं कुटिलीं[2] बभूव
　　तस्यास्ततोऽभिनवयौवनगर्वितायाः ॥ ३५ ॥

किं च महाभाग ! किं भणामि—

सद्वंशप्रभवासुपर्वपटली चेतश्चमत्कारिणी
मन्ये सापि सुमध्यमा रतिपतेः कोदण्डयष्टीकृता[3] ॥
सोऽसौ मार्गति यत्र दिग्जयकृते रोलम्बमालामयीं
वेणीबन्धनकैतवेन[4] घटयन्[5] गुर्वीं स्वमौर्वीलताम् ॥ ३६ ॥

विद्या[6]—सखि मकरिके ! स्वयमहमनुभूय ब्रवीमि निशामयमेव ते वचनमिति । परन्तु अभिनवयौवनाभिनिवेशवेशविशेषमानभ्रूप्रभायाश्चन्द्रप्रभायाः प्रत्यग्वर्णनाकर्णनाय[7] उदीर्ण एव मे मनोरथः । यथा वा प्रियसखी मन्यते ।

मक—( विहस्य ) भवतु तर्हि । महाभाग !

यदि भवति मनः सकौतुकं ते
　　श्रवणविधौ सुगुर्वीमनोज्ञतायाः ।
तदुपकलय किंचिदेव मत्तो
　　न हि महतां विफलन्ति कामितानि ॥ ३७ ॥

विद्या—सखि ! तथा सति मम परमानुग्रहः कृत एव स्यात् ।

मक—तर्हि अवदधातु महाभागः[8] ।

---

1. ङ—पतिमान मूहे
2. ङ—कुटिलं
3. क, घ, ङ—यष्टिः०
4. ख—के, केन
5. च—कुर्वन्
6. ङ—विद्यार्णवः
7. क, घ, च—वर्णनाय
8. क—अवदधतु महाभागः
　घ, ङ—अवदधतु महाभागाः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तस्या विधातुमिव कुन्तलकालिमानं
निष्पीडितेष्वजितवस्तुषु मन्मथेन ।
सारांश एव परिलोड्य[1] ततो गृहितो
भूमौ पतन्ति यमुनेत्यवशेषभागाः ॥ ३८ ॥

विद्या[2]—मकरिके ! इदानीं च्छिन्न एव मे संशयः । यत् त्वयोक्तं चन्द्रप्रभा मदननिर्मितेति ।

मक—किमिति संदिग्धेन श्रीमता[3] भूयते ।

विद्या[4]—सखि ! मया सन्ततमन्तः परामृश्यते, किमिति चन्द्रप्रभा विधातृसृष्टेर्विलक्षणा लक्ष्यत इति ।

मक—महाभाग ! विज्ञापयामि । यदुपजीव्य मन्मथोऽपि जगति मन्मथत्वं प्रथयति तत्तादृक् चन्द्रप्रभाऽङ्ग-निर्माणसौष्ठवं वेदजडस्य वरतो[5] विधातुः शिल्पमिति[6] कथं भवद्भिः संभावितम् ?

विद्या—सत्यं, ततस्ततः ?

मक—पुनर्भणामि—

सूनाशुगोऽपि [7]कृतसूनशरासनोऽपि
वाताधिकेन मधुना[8] कृतसंश्रयोऽपि ।
तस्याः परं विषमकुन्तलतावलम्बात्—
कामो जगत् यजये विहिताभियोगः ॥ ३९ ॥

विद्या—(स्वगतं, संभाव्यते यत्राहमेव प्रमाणमिति विचिन्त्य प्रकाशम्) सखि ! तन्मुखसौभाग्यमनि-र्वचनीयं कथं त्वया वर्णनीयमिति विमुग्धोऽस्मि ।

मक—सत्यमाह महाभागः । तथापि तन्मया यथामति निरूप्यते । तद्यथा—

न च भवति कुहूर्न राजयक्ष्मा न च दिनकृन्न च[9] सिंहिकातनूजः ।
तदपि मुखममन्दबन्धुराया भवति सुधांशुकदर्थनासमर्थम् ॥ ४० ॥

---

1. ङ, च—परिलोड्य
2. ङ—विद्यार्णवः
3. च—भवता
4. ङ—विद्यार्णवः
5. ग, घ, च—जरतो
6. क—शिल्पिमिति
7. च—धृत
8. च—मरुता
9. ङ—न्नरो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( ससन्तोषम् ) सखि मकरिके ! धन्यास्मि यत्त्वया सर्वोमुखस्यानिर्वचनीयत्वादविघातेन[1] स्वरूपोपन्यासे वाक्चातुरीविशेष एतावान प्रदर्शितः । तन्मन्ये भगवत्याः सरस्वत्या महत्याराधना भवत्या[2] जन्मान्तरे कृतास्तीति ।

मक—किं च—

अपि वचनमधुद्रवाभिरामं
जनहृदि यद्विदधे सुधांशुशङ्काम् ।
तदिह मृगदृशो मुखं सरोजं
भ्रमरकसङ्गमतः स्फुटीबभूव ॥ ४१ ॥

विद्या—सखि मकरिके ! चन्द्रप्रभावदनसदृशं किमस्ति वस्तु निरूप्यताम् ।

मक—( विहस्य ) महाभाग ! शशविषाणवद्दुर्लभे[3] वस्तुनि बद्धश्रद्धोऽसि यच्चन्द्रप्रभामुखसदृशं किमस्तीति मृगयसे । तथा हि—

य इह कमलसौरभं शशाङ्के
तदमृततां निदधीत[4] पङ्कजे वा ।
स वदतु सदृशं तदाननेन
श्वसितसुगन्धिसुधामयाधरेण ॥ ४२ ॥

तथापि मत्कल्पितं मयाभिधीयते[5] ।

रुचिररुचिभरैस्तरङ्गिताया
वरतनुमञ्जुशरीरदीर्घिकायाः ।
किमपि वहिरुदीतकण्ठनालं
वदनसरोजमनिन्द्यमुज्जिहीते ॥ ४३ ॥

विद्या—मकरिके ! साधु साधु । यन्मुखस्य पङ्केरुहत्वरूपणेनापि[6] त्वया शरीरदीर्घिकाजन्यत्वेन प्रसिद्ध-पङ्कजान्महद्वैलक्षण्यमुद्घाटितम् ।

---

1. घ, च—० त्वाविघातेन
ङ—० निर्वचनीयत्वविघातेन
घ—भगवत्या
ग—शशविषाणविद्युन्निभे

4. च—निदधाति
5. घ—मया विधीयते
ङ—Omits this line
6. ङ—पङ्कजत्व रूपणेऽपि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—सत्यम्। अन्यैः पुनरन्यथा मन्यते।

विद्या—कथमिति जिज्ञासुरस्मि।

मक—भणामि।

आधाय तन्मुखसरोजमखण्डचन्द्र-
चक्रे [1]पुरा घटयति स्मरकुम्भकारः।
तेनेक्ष्यते शशिनि तत्र जनेन साक्षा-
दद्यापि तद्वदनकान्तिविशेषलेशः॥ ४४॥

अन्ये च,

तस्या मुखाम्बुजनिरीक्षणजायमान-
लज्जाकुलं हिमरुचेर्हृदयं द्विधाऽभूत्।
तत्रेक्ष्यमाणबहिरुद्गतकालखण्डं
लक्ष्मेति केचिदबुधाः परिकल्पयन्ति[2]॥ ४५॥

विद्या—( अकृतार्थ इव ) मकरिके! चन्द्रप्रभाललाटपट्टं किं विस्मृतवत्यसि?

मक—नहि नहि—

एणीदृशः कृतधियोः भवि भालपट्ट
चन्द्रार्द्धमेव कलयन्तु कलानुबद्धान्[3]।
तस्यान्तिकेऽपि नयनोत्पलमाविरस्तु
वक्त्राम्बुजं स्फुरति यन् किमिदं न विद्मः॥ ४६॥

विद्या—ततस्ततः।

मक—महाभाग!

तन्नाभिकुहरोदरादुदयिनी या रोमराजीमिषात्-
न्द्व्यामा काचन वल्लरी कुचगिरिद्वन्द्वान्तरालेऽविशत्।
शङ्केऽन्तः प्रविलीय तत्र वत्र्त्रे सा चोर्द्धमुल्लासिनी
नासावंशमतीत्य यत्किशलयं चिल्लीनिभा द्योतते॥ ४७॥

---

1. क—omits 'चक्रे'
2. ङ—Ms. only has this sloka
3. घ, ङ—कलानुबन्धात्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( संस्मृत्य संस्मृत्य ) मकरिके ! विमलाप्रासादोपकण्ठे धीरंमन्योऽप्यहं येन तथा विहस्तीकृतः तस्यास्तन्नयनचातुर्यं शुश्रूषुरस्मि ।

मक—सत्यम्,

विकिरति परितोऽमृताम्बुपूरं
जनयति दिक्षु मनोजबाणवृष्टिः ।
रचयति गगनं विचित्रमारात्
किमिव करोति न तद्दृशोः प्रकारः[1] ॥ ४८ ॥

विद्या—सखि, तन्माहात्म्यं विशेषान्निवेदनीयम् ।

मक—( विहस्य ) महाभाग ! चन्द्रप्रभानयनचातुर्यं किमिति भूयो भूयः पृच्छसि ।

विद्या—सखि मकरिके ! प्रेमस्वभावप्रावल्येन तत्र सुखदुःखान्वयं सातिशयमनुभूतवता मयापि—

पीयूषं वा किमेतत् किमिव रसनिधेः कालकूटोऽवतीर्ण्णः
किं यूनां देहवद्धः सुकृतदुरितयोः प्रादुरासीद्विपाकः ।
किं वानन्दो वपुष्मानुदभवदथवा चापसंपत्तिरित्थं
निश्चेतुं नैव शक्यो भवति मृगदृशस्तादृगन्तो दृगन्तः ॥ ४९ ॥

मक—महाभाग ! सत्यम् । अचिन्त्य एव चन्द्रप्रभालोचनाञ्चलः । तथा हि—

वक्रीकृताञ्चलतया ननु कुञ्चिकेति
संभावयन्ति मुनयो नयनं मृगाक्ष्याः ।
उद्घाट्य येन हृदि धैर्य्यकवाटमेषां
संपादितो मनसिजेन शरप्रवेशः ॥ ५० ॥

किं च,

यदवधि[2] सरसीरुहं[3] शुभाङ्ग्याः
स्फुटमभवन्नयनश्रियोऽपहारि ।
तदवधि सततं जलेषु वन्दीकृत-
मिव तिष्ठति मोदतां क्वराज्ञः ॥ ५१ ॥

---

1. ङ—प्रचारः
2. ङ—यदि विधि
3. ध—सर सरसीरुहं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—सखि ! एवं चेन् तर्हि अबुद्ध्यैव गङ्गा सरसिजेषु व्यवस्यते ।

मक—कथमिव ।

विद्या—आलोचयतु प्रियसखी स्वयमेव । यदि चन्द्रप्रभानयनश्रीः क्रमात् पूर्वापेक्षया प्रतिदिनमधिकैवो[1]-पलक्ष्यते तत्कुतः पङ्कजेषु कागभिशापो[2] वृथा गोपितः[3] ।

मक—श्रुत्वा करतालोत्तरं स्मयते ।

विद्या—मकरिके ! पुनः पुनस्तदेवाभिधीयताम् ।

मक—अभिधीयते ।

सुतनुलसदपाङ्गभूरिभङ्गी-
विविधगतागतिशि[4]क्षयाकुलेव ।
कलयति शफरी पयोऽन्तराले
ध्रुवमधुनापि मुहुर्विवर्त्तनानि ॥ ५२ ॥

विद्या—सम्भाव्यते । यतो दुष्करे कर्मणि व्याप्रियमाणानां प्रथमतः खुरलिका सलिलादिष्वेव निरूप्यते । हुं ततः ?

मक—किं भणामि ।

विद्या—सखि ! भूयोऽपि तदेव किं न[5] वर्ण्यते ?

मक—भवतु महाभाग,

ये जीवनाय वदने दधते तृणानि
भ्राम्यन्ति भूमिभृतयोऽपि[6] भयाभिभूताः ।
तेष्वेव वामनयना नयनाम्बुजेन
किं पौरुषाय हरिणेषु कृता जिगीषा ॥ ५३ ॥

---

1. क ख, ग, घ—० मेकैव ०
   च—मनेकेव
2. क, घ—पराभिशापो
   ङ— तदपहाराशापो
3. च—आरोपितः
4. घ—गतागत
5. घ, ङ—omit 'न'
6. क, घ, ङ—भूमिभृति येऽपि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

यदतनुशवरेण[1] पातितं तच्छ्रुतिमयपाशयुगं तदन्तराले ।
युवनयनविहङ्गमा निपत्य[2] क्वचिदपि यातुमितो न शक्नुवन्ति ॥ ५४ ॥

[ विद्या—मकरिके ! तस्या नासासौष्ठवं कीदृशमिति जिज्ञासुरस्मि । ][3]

मक—किं न जानासि ? अहं शङ्के—

तेपे तपो महदधोवदनं नगाग्रे[4]
प्राक् क्षीण[5]सौरभतयेव तिलप्रसूनम् ।
घ्राणाभिधे जनुषि यन् क्षितिपालपुत्र्याः
श्वासोद्भवं किमपि सौरभमाससाद ॥ ५५ ॥

विद्या—भद्रं भद्रम् । ततः ततः ।

मक—किं च—

दन्तच्छलेन मुखसंपुटके तदीये
धत्ते मनोजवणिजो[6] नवमौक्तिकानि ।
जागर्ति यत्र नवशोणितशोणशोचि[7]-
रेषाधरद्वितयजा तुपचिह्नरेखा[8] ॥ ५६ ॥

अथवा

नरपतितनयामुखेऽमृताब्धौ
समयवशाद्विभिदे यदुक्तिशुक्तिः ।
न किमु समुचितं सरोरुहाक्ष्या
दशनमिषेण पतन्ति मौक्तिकानि ॥ ५७ ॥

विद्या—सखि चन्द्रप्रभावचने तव वचनावकाशं नावकलयामि[9] ।

---

1. ङ—ादि तनु ०
2. क,ख—यु जन विहङ्गमान्निपात्य
3. च—Ms. omits the line
4. ङ—नगात्रे
   च—निशाग्रे
5. घ—प्राङ्क्षीण
6. च—वणिको
7. ङ—रोचि
8. ङ—तुपचिह्नमद्रा
9. ङ—नोऽलोकयामि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—( विहस्य ) महाभाग ! भणामि, श्रूयताम् । मन्ये

यान्यक्षराण्युदभवन् सुमुखीमुखेन्दो-
रासाद्य तानि मदनोऽपि जगद्विजेतुम् ।
वाणी चकार तत एव बभूव तेषां
वाणीति काचन महीवलयेषु संज्ञा ॥ ५८ ॥

विद्या—सखि मकरिके ! दुर्भगामिव चन्द्रप्रभाकण्ठतटीं वचनोपकण्ठेऽपि न कुरुषे ।

मक—श्रीमन् ! किमुच्यते ।

वार्णाविलासमदनोदयभृन्त्रिलेखी[1]
विभ्रद्गलो नृपभुवः खलु सिद्धपीठः[2] ।
तत्राद्भुतं महदिदं स्थितिमन्तरेण
यद्वीक्षणादपि जनोऽजनि पूर्णकामः ॥ ५९ ॥

विद्या—सखि मकरिके ! साधु साधु ! यत्त्वया सखीकण्ठे रेखात्रयसम्बन्धेन लेखत्रयसम्बन्धः साधु समर्थितः ।

मक—महाभाग !

तस्याः कण्ठतटं विधाय विधिना रेखात्रयं तन्वता
भूतं भावि भवच्च नेदृशमिति व्याख्यातमस्ताक्षरम् ।
तत्तादृक् प्रसमीक्ष्य मानसभुवा[3] जेतुं त्रिलोकीमिमां
मन्ये सैन्यजय[4]प्रयाणसमये माङ्गल्यकम्बुकृतः ॥ ६० ॥

विद्या—सखि ! तव सखीस्तनस्वरूपानिरूपणादकृतार्था[5] मे कर्णद्वयी ।

मक—तर्हि निरूप्यते ।

---

1, घ—भृन् त्रिरेखा
ङ—भूभृलेखी
2 च—सिद्धपीठं

3. क—त्वा
4. च—सैन्यजन
5. ङ—स्वरूपमनिरूप्य

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

रतिरतिपतियुग्मं सार्वभौमाधिकारे
यदतनुतनुराज्ये यौवनेनाभ्यषेचि ।
इति निभृतमुदन्तं हेमसिंहासनान्त-
स्तदुरसि कुचकुम्भौ[1] हेमकुम्भौ प्रयातं ॥ ६१ ॥

[विद्या—सखि !
येनासाद्य कुचद्वयेन सुतनोरौन्नत्यमत्युत्कटं
प्रारम्भि प्रथमं पराभवपदं कुम्भी न कुम्भद्वयी ।
का नाकारि विभीषिका कलशयोः के धिक्कृता नाद्रयो
दैवात्तच्च तिरस्क्रियां भजति चेच्चेलाञ्चलादौचिती ॥ ६२ ॥

मक—( विहस्य स्वगतम् ) अम्बरसम्बरणादनावृतकुचकलशलुलोकिपाभङ्गभवरोषकलुषितमानसेन विद्याधरेण मनुसरिणेव यदभिधीयते तत्सर्वं मीमांसितं सत् प्रेमपरमेव पर्यवस्यति । ][2]

( प्रकाशम् )[3]—

तुङ्गस्तनाग्रवड़भीशिखरे शयालोः
कामस्य नाभिसरसीमवरोहणाय ।
तारुण्यशिल्पिरचिता रुचिरेन्द्रनीलै—
र्निःश्रेणिकेव शुशुभे नवरोमलेखा[4] ॥ ६३ ॥

विद्या—सखि ! त्वत्सखीभुजवर्णनाकर्णने ममोत्कण्ठा पुनस्तदवस्थैव ।

मक—( विहस्य ) महाभाग !

---

1. घ, च—स्तदुरसि कुचदम्भौ
ङ—तदुपरि कुचदम्भौ
2. ङ—Ms. omits the bracketed portion and reads the following sloka in that place.
पि. च—
मन्ये सुमेरुशिखरे तदुरोजकुम्भौ
विद्याधरोचितविनोदनिवासभावात् ।
याभ्यामधोऽमरवधूमृगनाभिजुष्ट-
स्वेदाम्बु संस्रवति रोमलतामिषेण ॥
3. ङ—किं च
4. ख—राजि
च—रेखा

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

पत्रावलीपरिगता नवकर्णिकाढ्या
वक्त्राम्बुजाकलितबाहुलतामृणाली ।
सत्सौरभाद्भ्रमरकैरुपशोभमाना
निःसंशयं नृपसुताऽजनि पद्मिनीयम् ॥ ६४ ॥

विद्या—सखि ! किमपराधमङ्गुलिभिर्यत प्रत्यङ्गलेखेऽपि न गण्यन्ते ?

मक—महाभाग ! ताश्च मया अन्यथोत्प्रेक्षिताः सन्ति[1] । निशम्यताम्,

पञ्चेन्द्रियाणि यमिनां युगपज्जिगीषुः
पञ्चापि शङ्करशिरांसि हठाज्जिहीषुः[2] ।
यां मन्मथो द्विरिह[3] पञ्चशरीं व्यधत्त
तां सुभ्रुवोऽङ्गुलिमिषात् करयो न्यधत्त ॥ ६५ ॥

विद्या—सखि ! भवती चन्द्रप्रभा मध्यभागे[4] किमिति मध्यस्था भवति ?

मक—महाभाग ! अवलग्ने लग्नाया मम माध्यस्थ्यमन्यथयितुं केन शक्यते[5] ।

विद्या—( सानन्दम् ) तर्हि लग्नत्वमाविष्क्रियताम् ।

मक—क्रियते,

रतिसुखदतया जनैर्गृहीतो-
रह[6] इति भूपभुवोऽपि[7] मध्यभागः ।
किमिव गगनरूपितां[8] स धत्ते
किमणुतया विहरत्यहो न जाने ॥ ६६ ॥

विद्या—भद्रे ! धन्यासि यस्यास्ते ईदृग्वक्रिमोपक्रमशाली[9] वाग्विलास इति स्मयते[10] ।

---

1. क, ख—सन्तः
2. ङ—० ज्जिगीषुः
3. ङ—द्विरिव
4. ङ—वामभागे
5. ङ—मन्येत
6. ङ—हर
7. ङ—भूप्रभवोऽपि
   च—भूतभुवोऽपि
8. च—० रूपतां
9. ङ—विभ्रमोपक्रमशाली
10. ङ—विस्मयते

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—किं च—

आजन्मनो विविधकेलिनिदानभूतं
यन्मां पुरा सहचरी[1] सुचिरं पुपोष ।
तच्छैशवं क्व गतमित्यनुचिन्तयेव
संक्षीयते सततमेणदृशोऽवलग्नम् ॥ ६७ ॥

विद्या—सखि ! तव सखीमध्यभागकृशिमानमस्मिन्नेव[2] व्याप्तिग्रहादन्यथाऽनुमिनोमि[3] ।

मक—तच्च किदृशमिति जिज्ञास्यते ।

विद्या—सखि !

वदनविधुविलोकने कुचाभ्यां
पृथुलतया विहितो यतोऽन्तरायः ।
किमु नलिनदृशस्ततोऽनुतापात्
प्रतिदिवसं कृशिमानमेति मध्यः ॥ ६८ ॥

मक—( स्वगतम् ) अहो, तद्वदनविलोकनाभावान्मयापि कृशिमोत्तरेण भूयत इत्यनेनापि उपन्यस्तम् । ( प्रकाशम् ) महाभाग !

लावण्यपुरमवगाह्य नृपोद्भवाया
उच्छृङ्खलं विहरतो मदनद्विपस्य ।
छिन्नापविद्धपतितानि गडत्रयीव
नाभितडागसविधे त्रिवली विभाति ॥ ६९ ॥

विद्या—सखि ! चन्द्रप्रभा मकरिका च द्वे एकशरीरे एवेति मदग्रे विहङ्गिकया यदभिहितं तत् तथैवानुभवामि ।

[मक—को वा महाभागस्यानुभवो य आवयोरेकशरीरत्वे प्रमाणं भवति ।

विद्या—यत् तयेव त्वयापि तन्नितम्बद्वयं पृष्ठतः क्रियते ।

मक—(विहस्य) महाभागोऽपि वक्रोक्त्या किंचिद् वक्तुं न जानाति[4] ? ][5]

विद्या—ततः ततः ।

---

1. क, घ—सहचरं
2. क, घ, च—कृशिमानं स्वस्मिन्नेव
3. घ—० दन्यनुमिनोमि
4. क, घ , च—जानासि
5. ख—omits the bracketed portion.

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—
माद्यन्मरालगृहिणीगमनोपदेशात्
तस्या बभूव गुरुरेव नितम्बबिम्बः।
वामभ्रुवोऽपि तदतिक्रमणापराधे
संभाव्यते न किमधःपतनं शरीरः[1] ॥ ७० ॥

किं च—

पञ्चेषुणा निखिलदिग्विजयोद्यतेन
शङ्के स्वयं परिसरे निजमन्दिरस्य।
आरोपितं निखिलमङ्गलकृत्यहेतो-
रूरुच्छलेन कदलीतरुयुग्ममेतत् ॥ ७१ ॥

विद्या—सखि! तव सखीजघनं युवजनोज्झासनजन्य[2]पातकदूषितमिव प्रतीयते यत् प्रति प्रतीकोपन्यासेऽपि पापलेप[3]भयादिव भवत्या तन्नामापि न गृह्यते।

मक—(विहस्य) अवदधतु महाभागाः। (दशनैः रसनां दष्ट्वा) महाभाग! किमुच्यते यदधिष्ठातृणां भवादृशानां मनस्विनां[4] मदनतापमपाकरोति। तज्जघनं जन्मान्तरीयसुकृतलभ्यं तीर्थमेव। कथं महापातकदूषितमिति महाभागो भणति।

विद्या—कथं तत्र तीर्थत्वं समर्थितं भवत्या।

मक—
परमतिविमलावधूशरीरे
प्रवहति कान्तिमयी तरङ्गिणी या।
कलयति न तदीयसैकतत्वं
जघनतटी किमहो सुमध्यमायाः ॥ ७२ ॥

विद्या—(क्षणं विचिन्त्य) सखि, सत्यं भणसि। परं मादृशां तादृशं सुकृतं कुतः संभाव्यते[5] येन तदधिष्ठाय मदनतापमपनुदामः[6]।

मक—पुरुषपुङ्गव!

---

1. ख, ग, च—गरीयः
ङ—महीयः
2. क—ज्जासमजन्य
च—ज्झासनजन्य
3. घ—लेश
4. ङ—भवद्दशा तपस्विनां।
5. ख—सञ्चाव्यते
6. ङ—मदनपापमपनुदामः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

कलयति शशिनं कुहूरजन्यां कुसुमकूलं नभसोऽपि यश्चिनोति।
इह सुभग तदीयगुल्फयुग्मं भवति स एव विलोकितुं वराकः ॥ ७३ ॥

विद्या—( स्वगतम् ) एतेन मकरिकया चन्द्रप्रभाया उत्तमस्त्रीलक्षणमपि सूचितम्। भवतु, ( प्रकाशम् ) ततस्ततः ?

[1]मक—महाभाग !

कनककुसुमकोरकव्रजाना[2]-
मुपरि भवेद्यदि मौक्तिकप्रचारः[3]।
तदवनिवलये स्फुटोपमा स्यात्
कमलमुखीचरणाङ्गुलीनखनाम् ॥ ७४ ॥

विद्या—(स्वगतम् ) हन्त, कदेत्थमनुपमास्तदङ्गुलयो मया संवाहकेन परिशीलनीयाः। ( प्रकाशम् ) सखि ! ततः ततः ?

मक—महाभाग ! शिखातःप्रभृति नखान्तं वर्णयन्त्या मया[4] किमवशेषितं यन्महाभागोऽपि ततस्तत इति पुनर्निवध्नाति।

विद्या—( सचकितम्) सखि ! किमुन्मादोन्मथिताऽसि यत् सकलापत्सु[5] मदेकशरणं तदीय चरणं परिहृत्य प्रत्यङ्गवर्णनं समापयसि ?

मक—(संस्मृत्य) सत्यं सत्यम्। परन्तु यत्रेदृशीमास्थामावहसि तच्चरितं तु श्रूयमाणमन्याय्यमिवावभासते।

विद्या—कथमिव ?

मक—( स्मित्वा ) निशम्यताम्।

सकलसरसिजैः सुसंचितं यद् चिरतरत्वमृदुत्वरक्ततादि।
तदखिलमपि सुन्दराधरायाः पदयुगली कवलीकृतं बभूव ॥ ७५ ॥

विद्या—( श्रुत्वा ससन्तोषम् ) सखि ! अन्यत्रान्यायशालिनोऽपि प्रभवो भक्तानां दयन्ते।

---

1. क, घ—Mss. omit the word
2. ङ—वृजाङ्कनानां
3. घ—प्रकारः
4. ङ—अनया
5. क—सकलापसु
ख—संज्ञाकलापस्तु

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक[1]—महाभाग ! ब्रवीमि ।

यस्यैव यत् प्रकृतिसिद्धतया प्रपन्नं
जन्मान्तरेष्वपि तदेव तमभ्युपैति ।
चन्द्रप्रभेति जनुरेत्य[2] विनिह्नुताया
लक्ष्म्याः पदं यदजनिष्ट सरोजमेव ॥ ७६ ॥

विद्या—सखि ! तर्हि चन्द्रप्रभा साक्षाल्लक्ष्मीरेवेति भणसि ।

मक—महाभाग ! परमहं न भणामि । किंतु तस्याः पुरुषोत्तमैकलालसापि तथा भणति ।

[ विद्या—स्मयते ।

मक—महाभाग !

अलमधिक [3]निवेदनैरिदानीमपि सकलाधिकसम्पदीश्वरायाः ।
शृणु सुभगपरं सरोरुहाक्ष्या निरुपमताजनि संकटैकहेतुः ॥ ७७ ॥ ][4]

इति मया निवेदिते, सखि लीलावति ! स च पुरुषमणिः क्षणमुन्मनायमानः तत्स्वरूपचिन्तनया विगतान्यकर्त्तव्यः सरसिजसम्बर्त्तिकाशतकल्पिते[5] तल्पतले पर्य्यपतत् । मया च तद्दुःखनिरीक्षणाक्षमतया ततः सद्य एव निर्गतम् ।

लीला—सखि मकरिके ! इदानीं प्रकृतं प्रस्तूयताम ।

मक—तदनु मयोक्तं, विहङ्गिके ! ईदृशं भारं बोढुं त्वमेव समर्थासि । सा च विहस्य चेलाञ्चलाद् बहिष्कृत्य पत्रिकां मे दत्तवती । मयापि स च लेखो नृपात्मजाया उपहृतः । सा च—

अतिवर्त्तुलवर्णशोभमानं नवलाक्षारसरक्तमादरेण ।
परिगृह्य करद्वयेन लेखं हृदि जोषं नृपसम्भवा पपाठ ॥ ७८ ॥

तद्यथा—

मदनशवरभर्त्तुर्यन्त्रवज्जालरन्ध्रा-
द्रुततरमनुकम्प्य दुर्गतो निर्गतो यः ।
तरलतरतरङ्गैर्लेलिहानो दिगन्तं
विशति[6] स तव कान्ते मादृगन्तं दृगन्तः ॥ ७९ ॥

1. च—मधुरिका
2. ङ, च—जनिरेत्य
3. च—विनोदनैः
4. ङ—Omits the bracketed portion
5. ङ—संवर्त्तिका०
6. ङ—दिशति

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

केचिन् पाथोजमेके कुवलयमपरे खञ्जनं मीनमन्ये
कामेषुं केचिदूचुः पृथगिति बहुधा यत्र संदिग्धवन्तः।
तस्मिन् जालान्तरस्थे भ्रमयति भुवनं लोहिते लोचने ते
दासेनैकेन हृष्यत्तनु सुतनु मया निश्चितो मीनभावः ॥ ८० ॥

किं च—

चन्द्रप्रभे हृदयपङ्कजमेतदुच्चैः
यन्मे दुनोपि सदृशं किल कर्म तत्ते[1]।
मध्नासि[2] यत् कुवलयं नयनाञ्चलेन[3]
किन्तेऽनुरूपमिति चेतसि चिन्तयैतत् ॥ ८१ ॥

किं च—

मच्चित्तैकचकोरचञ्चु चषके या कौमुदीरूपिणी[4]
जाने यामपि चन्द्रचन्दनमयीं चर्चां निजोरःस्थले।
[5]यावज्जीवनशर्मकर्मणि पुनर्जीवातुरेवासितां
त्वां हित्वा यदहं ध्रियेे[6] सखि ह्रियं दोषः स किं नायुषः ॥८२॥[7]

इति पठनानन्तरमेव झटिति स्मरणोदित[8]विद्याधरवदनचन्द्रहेतुक[9]विवृद्धिशालिप्रमोद[10]-पयोधितुङ्ग[11]तरङ्गशतप्लवमानमानसा सती क्षणं विचिन्त्य तदुद्देशेन प्रतिलेखं लिखतिस्म।

तद्यथा—सकलज्ञ[12] किमस्ति ते विशेषादुपदेष्टुं परमेतदेव विद्धि।
कलयन्ति न कीदृशानि नार्यो दयितप्रेमरसेन साहसानि ॥ ८३ ।

लीला—सखि ! एवं चेदनयोर्मनोगतं[13] भाविकार्यमप्युपन्यस्तमस्ति।

---

1. ङ—निर्मितं ते
2. ङ—मृद्नासि
3. ङ—नयनाञ्जनेन
4. ङ—मच्चित्तैकचिनोरुचञ्चु चसके याजौ मुदी कौमुदी
5. घ, क, च—यामज्जीवन
6. ङ—प्रिये
7. ङ—नापुषम्
8. ङ—स्मरणपथोदित
9. ङ—चन्द्रकेतुक
10. ङ—प्रपद
11. ङ—तुङ्गतर तरङ्ग
12. ङ—सकल
13. ङ—अनया मनोगतं

मक—अथ किम्।

लीला—सखि ! अपि तर्हि विमलाचन्द्रशालादर्शनान्तरमपि गवाक्षमूलादौ तयोः परस्परसाक्षात्कारः[1] पुनरपि संपन्नः ?

मक—सखि ! किं ब्रवीमि, ततः प्रभृति प्रतिदिनमेष विद्याधरश्चन्द्रप्रभासौधसमीपे भ्रमणीव्यपदेशेन चंक्रमन् गवाक्षमूलमाश्रित्य स्वयमेव प्रतिक्षणं प्रतीक्षमाणां निद्रापायकषायेक्षणां[2] कुवलयेक्षणां अवेक्ष्य एवमेव लिखितवान्।

लीला—ततः ?

मक—सखि ! अतीतायां रजन्यां प्रासादोपरि विमलाप्रसादेन सकलसखीसमक्षमेव विहङ्गिकया तयोः समागमः समपादि।

लीला—( सकौतुकम् ) तयोः स्वच्छन्दं प्रथमावलोकने प्रवृत्तां वृत्तिं[3] विस्तरेण श्रोतुकामास्मि।

मक—( परिहस्य ) सखि लीलावति ! अतीव रसिकासि। यदनयोः प्रथमावलोकनप्रकारश्रवणे गाढोत्कण्ठासि।

लीला—( निरपेक्षेव ) सखि एवं चेन् तर्हि मास्तु।

मक—नहि नहि, एतादृशी कौतुकिनी चेदसि श्रूयताम्। प्रथमं हि—

> यैरन्तः प्रथमं[4] प्रविश्य सहसा चैतन्यमुन्मूल्यते
> ये तन्वति जगन्ति मन्मथशरच्छिन्नानि वा सर्वतः।
> अन्योन्यप्रतिघट्टनोच्छलदुरु[5] प्रारम्भभावोर्मयो
> यूनोः सङ्गतयोस्तयोर्विवृद्धिरे ते ते दृशो विभ्रमाः ॥ ८४ ॥

लीला—( सानन्दस्मितम् ) सखि ! इतोऽप्यधिकं सम्भाव्यते। हुं ततः ?

---

1. ङ—परस्पर प्रेमाविष्कारपरिस्कृतः साक्षात्कारः
2. ख—Omits निद्रापायकषायेक्षणां
3. ङ—reads 'प्रवृत्त" for प्रवृत्तां वृत्तिं
4. ङ—प्रसभं
5. ङ, च—च्चल दुरु

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—
फुल्लेन्दीवरवृन्दनिन्दन[1] कलाकर्तापु लोलश्रियो
विभ्राणा निलयोदरेऽपि तरसा कादम्बिनीडम्बरम् ।
वक्त्राम्भोरुहनिष्पतन्मधुकरभ्रान्तानुकारित्विषो
बालाया दयितं प्रति प्रतिदिशं[2] भ्रेमुः[3] शतं दृष्टयः ॥ ८५ ॥

अपरं च—

भर्तुश्चेतसि भङ्गिभिः[4] स्मरभरोपक्रान्त[5]भावोदयाः
प्रेङ्खत्प्रेमपरम्परापरिगताशालीनताशालिनः ।
भ्रूचापाद्बहिरुत्पतत्स्मरशरश्रेणीमनोहारिणो
निष्पेतुः परितः प्रमोदतरलास्तस्याः कटाक्षोर्मयः ॥ ८६ ॥

सा च बाला[6] लज्जाप्राधान्येन सखीसमक्षं प्रथमप्रियसमागमे प्रहगृहीतेव बलाल्लज्जया परवशीकृता। ततो विद्याधरमवेक्ष्य

मन्दोद्गीर्णैः प्रियतममसावन्धयन्ती[7] कटाक्षै-
रुन्मग्नेव प्रमदजलधेस्तूर्णमुत्थाय बाला ।
स्मेरे वक्त्राम्बुरुहरभसादर्पयन्ती[8] पटान्तं
तस्थौ लज्जावनतवदना भूतले दत्तदृष्टिः ॥ ८७ ॥

किं च—

स च तत्क्षणमुद्धत[9]प्रमोदो वनितां तां जनितानुरागबन्धः ।
मदनानलशान्तिवारिधारां सुदतीं क्षीणतमां तदालुलोके ॥ ८८ ॥

लीला—सखि मकरिके ! सम्मुखीने श्रेयसि[10] अकाण्डप्रसृतां लज्जां प्रतिबन्धकीभूतां अधिगम्य तैः पुनः किं प्रतिपन्नम ?

---

1. ङ—नन्दन
2. च—प्रतिदिनं
3. ङ—भ्रेमुः
4. च—भङ्गिभिः
5. ङ—प्रक्रान्तः
6. ङ—बालाया
7. ङ—वक्षयन्ती
8. घ—० रसादर्पयन्ती
च—वक्त्राम्बुजनुपिरसा दर्पयन्ती
9. च—० मुत्थित
10. च—प्रेयसी

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—सखि ! चटुलचाटुपटुना विद्याधरेण तदपनोदनाय कतिधा न व्यवसितम्।

लीला—सखि ! तदीयश्चाटुप्रपञ्चः श्रोतव्यश्चेन्निवेद्यताम्।

मक—सखि ! त्वयि किमनुक्तं यच्छ्रोतव्यश्चेन्निवेद्यतामित्युच्यते।

लीला—नहि नहि, तथापि राजान्तःपुरमिति तथोक्तम्।

मक—तदनु विद्याधरः प्रेयसीं प्रति—

आधत्स्व कुन्दकुसुमानि नवप्रवाले
चन्द्राद्बहिर्वितनु तन्वि सुधाप्रवाहम्।
इन्दीवरैस्त्रिजगतीमभिशेचयाशु
कोऽयं ग्रहः शिशुकुरङ्गितरङ्गिताक्षि ॥ ८९ ॥

तादृक् प्रदर्श्य मयि सुन्दरि भावबन्धं
भूत्वाद्य[1]वज्रहृदया न विलोकसे किम्।
युक्तं न ते सुचिरदुर्विधपाणिपद्मे
दत्वा धनं पुनरितः परिहारदैन्यम् ॥ ९० ॥

दोषोऽस्ति चेन्न किमसौ प्रणयैर्निरुद्धो
लज्जास्ति चेन्न कृपया किमियं निरस्ता[2]।
वैमुख्यमावहसि चेन्मयि दैवदोषात्
विद्याधरं सुतनु विद्धि कथावशेषम् ॥ ९१ ॥

त्वच्चातुरीशतनिरीक्षणनिर्निमेषो
दर्पोदयान्न धरणौ चरणौ ददानः।
कान्ते जनोऽयमधुना सुरताभिलाषी
[3]तत्पाययैनमधरामृतमीहसे किम् ॥ ९२ ॥

---

1. च—मामव
2. ङ—किमयं निरस्तः
3. क—तत्पालयै
ङ—तत्प्रापयै

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

ये मां पुरा सुतनु[1] मर्मणि संप्रशन्ति
तेऽमी सुखं ददतु मे कलकण्ठनादाः ।
दाहाय योऽजनि मरुन्मलयाद्रिजन्मा
माहायकं स तनुतां सुरताहवेषु ॥ ६३ ॥

धर्मोऽपि नर्मसचिवत्वमुपैतु पार्श्वे
प्रस्थानमावहतु दिग्विजये यशोऽपि ।
हा तन्वि[2] खेलतु चिरं त्वयि साधुवादो
दीने जने यदि कृपालवमातनोषि ॥ ६४ ॥

इत्थं दयितचाटूनि पटूनि हृदयद्रवे ।
श्रुत्वा स्मित्वा सखी चक्रे मुखं किमपि सम्मुखम् ॥ ६५ ॥

लीला—( साकूतम् ) ततः ततः ?

मक—सखि ! तत्क्षणं चन्द्रप्रभाचित्तविज्ञया विहङ्गिकया बहिर्निःसारिता वयम् । ततः परं किं वृत्तमिति न जानीमः ।

लीला—सखि ! अपवार्यालम[3] । नूनं विमलादेवीप्रसादमहिम्ना चन्द्रप्रभा मानुष्यपि विद्याधरी संवृत्ता ।

मक—( निरुत्तरं स्मयते ) ।

लीला—( सप्रश्रयम् )[4] भगवति विमले ! प्रसीद । दुर्घटघटनापटीयसस्त्वत्प्रसादादृते ईदृशि कर्मणि को नु व्याप्रियेत् , व्याप्रियमाणश्च को वा फलभागी भवतु ।

मक—सखि लीलावति ! मखि मकरिके, किमुद्विग्नेव लक्ष्यसे[5] इति यत् पृष्टं तत्किं न शृणोषि ?

लीला—हुं , उद्वेगनिदानं चन्द्रप्रभेति यदुक्तं तन्निवेद्यताम् ।

1. ङ—सुमखि
2. ख—तन्वन्ति
3. ख—अपजालम
4. ङ—सप्रणयं
5. ङ—लंबसे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मक—सा चेदानीं तद्गुणाकृष्टहृदया मुहुर्मुहुः प्रवर्द्धमानमानसं गतपरमानन्दमयपयःप्रवाहश्रोणी-धौतविवेकगन्धसम्बन्धेव पित्रोरनुज्ञामृतेऽपि तन्निवासमावसन्ती तच्चरणारविन्दपरिचरणपरमानु-ग्रहपरायणा जन्मकृतार्थयामीति व्यवस्यति। तेन भृशमुद्विग्नाऽस्मि।

लीला—तर्हि महति साहसिक्ये प्रविष्टाः स्थः[1]।

मक—अथ किम्। परं निष्प्रत्यूहं यथा निर्वहेत्तथा भगवत्यै विज्ञापयेत्युक्ता अन्योन्यं विहस्य उभे निजावासाय चेलतुः।

इति श्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजीकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
षष्ठः परिच्छेदः।

1. ङ—स्मः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# सप्तमः परिच्छेदः

अथ तत्र क्षेत्रे लीलावती परितोऽपि [1]प्रासादकुलमालोक्य विस्मितेव प्रियं सस्मितमाह—नाथ ! अप्येतादृशदुर्घटदेवालयशतघटनाकर्मकर्मठानां राज्ञामन्वये इदानीन्तनाः कंचन द्रिप्ताः[2] क्वचिदवनीमध्यासते ।

विद्यार्णवः—प्रिये ! किमुच्यते, न जानासि ? संप्रति गङ्गवंशरत्नाकरतादृशयशोमयतुङ्गतर[3]तरङ्गरिङ्गणारम्भगम्भीरतरकार्त्तिक[4]कृत्तिकापरिवृढाखण्डमण्डलायमानः समरगतशतसंख्यप्रतिपक्षसामन्तसीमन्तिनीकुलविपुलललाटनटघटमानसुन्दरसिन्दूरविन्दुवृन्दतरुणारुणकिरणसंपत्तिविलुम्पनसम्पादनजलदकाल[5]मेघायितविमलतरतरवारिमण्डलः, अनवरतप्रणामलालसोपनमदङ्गवङ्गकलिङ्गलाटकर्णाटसुह्मसौवीरगौड़चौड़[6]द्राविड़ादिदेशविशेषभूपकुलमौलितट[7]प्रकटमुकुटकोटिघटितविसंकटागणितमणिगणकिरणपुञ्जमञ्जरीपिञ्जरीकृतचारु[8]चरणारविन्दविहितकोकनदभ्रमपरवशमधुकरनिकरवन्दीवृन्दनिनदविरुदावलीप्रमोदमानमानसः, सकलसिद्धान्तनिष्ठाधिष्ठानताप्रतिष्ठितज्ञानविज्ञानपरिनिष्ठितनिखिलधरणीमण्डलमण्डनायमानपण्डितमण्डलीपुण्डरीकषण्डप्रमोदक्रियाप्रचण्डमार्त्तण्डमण्डलः, सुरशिखरिशिखरशेखर[9]खरतरस्खलदुत्तुङ्गगङ्गा[10]तरङ्गभङ्गिमाभङ्गुरमूर्त्तिकीर्त्तिवितानवितानितत्रिभुवनभवनोदरभ्रमणपरिपाटीदर्शितपाटवातिरेकप्रतापमहानटनटन[11]कर्मकार्मणसूत्रधारः श्रीमान पुरुषोत्तमनामधेयः क्षितिपतिः खिमुण्डिनामके जनपदे विजयनगरीं नाम राजधानीमध्यास्य धर्मेण पालयति[12] ।

—

1. ङ, च—प्रासादाकुल
2. ङ—दृप्ताः
3. ङ—omits 'तर'
4. ङ—रम्भणसंरम्भारब्धतरतराभिक
5. ङ—विलुम्पदकालकाल
   च—विलुम्पन संपादक जलदकाल
6. ङ—गौड
   च—गौल
7. ङ—भूपाकुलमौलितघट
8. ङ—चारुतर
9. ङ—omits 'शेखर'
10. ङ—गाङ्ग
11. ख—कर्म
12. ङ—धर्मेण पृथिवीं पालयति

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—महाभाग ! इह पृथिव्यामेतादृशगुणगणशाली कलियुगान्तर्वर्त्यपि सत्ययुगधर्मानुष्ठानपरः कथमसौ द्रष्टव्यः ।

विद्या—यदि तद्दर्शनमहामहसे समुत्कण्ठसे तर्हि विज्ञापि यज्जगति लब्धजन्मा को नु गङ्गाम्भसि स्नानमकृत्वा जगदीशमनवलोक्य पुरुषोत्तमदेवनृपतिं नेत्राञ्जलिना नापीय जन्म कृतार्थयति ।

लीला—( सप्रार्थनम् ) एवं चेत् तर्हि स्वगृहगमनावसरे तत्र गत्वा अवश्यं द्रष्टव्यः[1] । परं त्वत्र तस्य महाभागधेयस्य विजयनगरीनामधेयराजधानी कीदृशीति श्रोतुमिच्छामि ।

विद्या—सखि ! वर्णमाना विजयनगरी अनुभवमन्तरेण न कस्यापि विश्वसनीया ।

लीला—नाथ ! तथापि शुश्रूषा मां बलात् प्रयोजयति श्रूयतामिति ।

विद्या—सखि ! तदीयसौधानामुत्सेधं किं वर्णयामि । वर्ण्यमाने तस्मिन् अपि कः प्रत्येतु । तथा हि—

निर्गच्छन्नभसि यदीयकेतुदण्डे
संभूतो भ्रमितवपुर्जवातिरेकात् ।
किं हेतोः सुरपुरशिल्पिकल्पितायाः
कुन्दार्त्तेः[2] स्मरति दिने दिने दिनेशः ॥ १ ॥

किं च—

यत्सौधे मणिमयकुट्टिमे नताङ्गी क्रीडन्ती रतिरभसेन खिद्यमाना ।
निद्राणा विधुमुपधाय तत्प्रयाणे सद्यः क्ष्मापतितशिरा[3]चमच्चकार[4] ॥ २ ॥

तत्र धनरत्ना[5]भरणादिसम्पत्तिरवाङ्मानसगोचरा । तथा हि—

नित्यं रजोहृतिहृतद्युतिरत्नजात-
मुत्खाय यत्र चरणाभरणान्[6] मृगाक्ष्यः ।
नव्यं निखाय पुनरन्यदिहातिभव्यं
संकारसंकरमिदं बहिरुत्क्षिपन्ति ॥ ३ ॥

---

1. ङ—प्रष्टव्यः
2. ङ—कुन्दान्ते
3. क—शिखि
4. क, घ, ङ, च—श्चमच्चकार
5. ङ—धनधान्यरत्नाः
6. ङ—तरुणाभरणान्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

चन्द्रांशुव्यतिकरसंभवाम्बुपूरै:
निर्द्धौतं हिमकरकान्तपात्रमध्यात् ।
मृगयन्ती मृगमदमङ्गना यदीया
मुग्धत्वाद्वहति सखीषु शङ्कितचेत: ।। ४ ।।

अपरं च—

वैडूर्योपलघटितप्रकाण्डभाजां
वृक्षाणां मरकतनिर्मितच्छदानाम् ।
यस्यां मौक्तिककृतकोरकव्रजानां
द्विर्भावं प्रविदधिरे प्रबालखण्डा: ।। ५ ।।

किं च—

सद्रामा[1] कलितविलाससुन्दरश्री-
रुन्मीलत्कनकचयेन शोभमाना ।
बिभ्राणा कुशलवयोगमोदवृद्धिं[2]
या सीतामनुविदधे वनस्थलीं वा ।। ६ ।।

किं बहुना—

नैतादृक् प्रसरति संपदिन्द्रपुर्यां
नैतावान् धनदपुरे धनातिरेक: ।
पाताले क्व पुनरयं विचित्रभावो
नैतादृक् वसति पुरी जगत्त्रयेऽपि ।। ७ ।।

लीला—श्रुत्वाऽपि अश्रद्धधानेव स्मयते ।

विद्या—प्रिये ! यत्र यत्र संदिग्धासि तत्सर्वमनुभवादेव पुर:[3] प्रत्येतव्यम् ।

इत्थं तौ विजयनगरीगमनं निश्चित्य भगवतो दोलयात्रामहोत्सवं समाप्य अनिच्छन्तावपि नीलाद्रिनायकस्य पुरस्तादिति विज्ञापयाम्बभूवतु: ।

---

1. क—सुदामा
   ख—सप्तं
2. घ—० श्चामोदवृद्धिं
   ङ—० योगवृद्धिं
3. ङ—गुरो:

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

देव ! निवेदयावो भवते त्रियया पाशानतनेकशः ।
निवासं[1] देहि देवेश ! क्षेत्रेऽस्मिन पुरुषोत्तमे ॥ ८ ॥

इत्यभ्यर्थ्य[2] भूयो भूयः प्रणम्य[3] प्रेमातिरेकद्रयमानमानसौ कथंचित प्रभपुरतो निष्क्रम्य निजदेशाय प्रस्थानं रचयतः । तदनु—

गत्वा कियद्दूरमपेतहर्षं
विद्यार्णवः क्षेत्रविवासनेन[4] ।
कोकोलनामन्यथ नाविकानां
ग्रामं प्रविष्टो जलमालुलोके ॥ ९ ॥

विद्या—प्रिये ! प्रेक्ष्यतां, नौकाशतसंकटमिदं पयोधितटम् ।

लीला—( दृष्ट्वा साश्चर्यमन्तिकचरीभूय तत्परिशील्य प्रियं प्रति ) नाथ !

एषा कापि न वापिका लवणिमोद्ये कान्त वा वारिधि
रिङ्गत्तुङ्गतरङ्गभङ्गिविषमा नो वा नदी स्थैर्यतः ।
पारावारमहोदरातिगहनाकारा विपारामह-
त्येतादृक् भुवने मया जलमयी सृष्टिर्न दृष्टा क्वचित् ॥ १० ॥

इयं तु किं नाम्ना व्यपदिश्यत इति जिज्ञासुरस्मि ।

विद्या—श्रूयतां तर्हि । इयं तु—

पङ्कं यस्माच्चिह्निवं प्राहुरार्या मत्वर्थीयाकारयोगेन तस्य ।
स्त्रीत्वं लोकादास[5]इत्यादि[6]वद्यत्तस्माल्लोके चिह्निवेति प्रसिद्धा ॥ ११ ॥

लीला—अदृष्टचरीमेनामालोक्य विस्मितास्मि ।

विद्या—प्रिये ! एवमेव विधातुर्विश्वकर्मणः शिल्पमिदं जगन्नानाविधवस्तुजातवैचित्र्यपदमिति जाननपि[7]-किमिति विस्मयसे ।

---

1. क—निवेशं
2. ख—इत्यभ्यर्च्य
3. ङ—प्रकाम्य
4. क, घ—निवासनेन
   ङ—जिवासनेन
5. क, घ—लोकादास
   च—लोकादाह
6. क—वक्षत ०
   ङ—वद्यं ०
7. च—जानानापि, ङ—जानासि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—नाथ ! किमुच्यते ?

अत्रामुष्य विलक्षणस्य पयसः प्रोद्ध समीक्षापथं
कृत्वा वैभवमीदृशं कलयते का मद्विधा नाद्भुतम् ।
मन्ये मन्मथमाथिनो भगवतः क्षित्यादिमूर्त्यष्टके
नान्तःपातितया किमस्य विभुता जाता किलैतादृशी ॥ १२ ॥

विद्या—प्रिये ! तन्मूर्त्तिनामैश्वर्यं तु ततोऽप्यधिकं सम्भाव्यते ।

लीला—( सविषादम् ) नाथ, कथमिदंमुत्तीर्यताम् ।

विद्या—सखि ! नौकायां निद्राणा [1]चिल्किखामुल्लंघ्य सुखेन नानाविधान् जनपदान् पथि पश्यन्ती विजय-नगरीं प्रस्थितासि ।

लीला—( श्रुत्वा सातङ्कम्[2] ) पुनरपि संकटे पतिताः स्मः । ( उच्चैः ) महाभाग ! क एते परस्परं सापेक्षा अपि कोलाहलोत्तरं नौकामारोहन्ति ?

विद्या—को वेत्त्येषामसंख्यानां पथिकानां[3] नामधेयानि । परन्तु वयमपि एतैः सह नौकामारोहामः ।

लीला—( चकितेव दुःखेन स्वीकरोति ) । तदनुविद्यार्णवोऽप्यातरं दत्वा तरसा तीरमासाद्य सपरिकरः प्रियया सह सुखेन नौकामारुरोह ।

अथ नाविकैः कलितकेनिपातकैरवतारितास्तदनु ते परं तटम् ।
प्रतिपद्य हृद्यविषयानुबन्धिनं खलु खल्लिकोटविषयं समासदन् ॥ १३ ॥

लीला—( सानन्दमवरुह्य ) नाथ ! किं नामा कस्यायं विषयः ?

विद्या—एष खलु खल्लिकोटनामा जनपदः । अत्र हि—

शश्वद्धर्मपरो नयैकसदनं शौटीर्य्यपर्याश्रयो
धैर्यौदार्यविवेककेलिनिलयः कारुण्यपण्यापणः ।
षाड्गुण्यार्थविचारवारिधिगलन् सारांशपीयूषभाक्
प्रेम्णा पालयति प्रजाः पितृसमं पीताम्बरः पार्थिवः ॥ १४ ॥

---

1. च—चिल्लिका ०
2. ङ—साकूतम्
3. क—Omits पथिकानां

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

इत्युक्त्वा कियद्दूरे विक्रमपुरमासाद्य[1] प्रत्यापणनानाविधविचित्रवस्तुविलोकनविनोदेन सर्वतः परिभ्रम्य हट्टपथे[2] प्रविश्य पाकसामग्रीसंपादनपरतया साकाङ्क्षं मत्स्यानवलोकयाचक्रतुः ।

विद्या—( सानन्दम् ) प्रिये ! पश्य पश्य

पुच्छान् प्रोत्सारयन्ती रजतशकलनिष्कुलकवल्कान्यकल्कं[3]
विभ्राणोत्पत्य पात्राद्बहिरहिपतिवन्निःसरन्ती ससंभ्रमम् ।
धूर्ताभिर्धूसराङ्गी झटिति युवतिभिः सादरं नीयमाना
रोमन्थव्याजतो मे कवलयति मनो लावणी मत्स्यवीथिः ॥ १५ ॥

लीला—( विहस्य मुखे चेलाञ्चलमाधाय ) नाथ ! आर्यपुत्रस्येव अत्रत्यानामपि गरीयान् मत्स्यादरः । यदमी ब्राह्मणादयोऽपि विवर्णैः[4] सह परस्परोपमर्दमविगणय्य मत्स्यान् चिक्रीषन्ति ।

इत्युक्त्वा यथाभिकामं भोजनादिकं संपाद्य निशावसाने पुनरष्टदुर्गविषये कोदलाग्रामे प्रविशतः ।

लीला—( परितोऽवलोक्य ) नाथ ! इदं तु विषयान्तरमिव प्रतीयते ।

विद्या—कः सन्देहः ।

सा या नदी[5] खरखरीति भुवि प्रसिद्धा
सध्येपथं नयनयोर्विषयीकृता ते ।
तां विद्धि शुद्धमतिशालिनि[6] खल्लिकोट-
सीमां ततः[7] परमियानयमष्टदुर्गः ॥ १६ ॥

लीला—( अष्टदुर्गावलोकनेन वाढमभिनन्द्य ) महाभाग ! महाभागधेयानां धुरि आधेयनामधेयस्य कस्य नृपतेः अयं विषयः ?

विद्या—अवधार्यताम् । एष खलु अखण्डखण्डपालकुलहिण्डमानचारुचूडामणिनिकररुचिररुचिलटाटोप-चर्च्चित[8]चरणारविन्दस्य, दीनजननिवहानल्पकल्पितार्थप्रतिपादनपरतया अल्पित[9]कल्पपादपस्य,

---

1. ङ—विक्रमपुरपत्तनमासाद्य
2. ङ—हट्टमण्डपे
3. क—रजतशकलजिच्छुल्कावल्कान्यकल्काम्
   ङ—रजतरचितवच्छल्ककल्कान्यकल्कम्
4. ङ—वर्णैः
5. क—साक्षान्नदी
6. ङ—शुद्धिमतिशालिनि
   च—शुद्धमतिशीलित
7. ङ—सीमन्ततः
8. ङ—०चित
9. ङ—अर्पित ०

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

आश्रयसाधिमोपबृंहितगर्द्धातिरेक[1]वर्द्धमानपरस्परस्पर्द्धाविशेषदूरोपनमदनेकदानदाक्षिण्यसौशील्यादिगुणगणसंकटसंवामशालिनः, क्रोधपरवशतया समरसीमोपनतस्वमुखनिरीक्षणक्षणोपचीयमान[2] भयचयजर्जरितान्तःकरणनिजचरणैकशरण[3]वैरिवीरनिवहाभयप्रदानदानशौण्डदोर्दण्डयुगलस्य जगद्बन्धुनामकस्य नृपतेरिति।

लीला—नाथ! प्रार्थये, मध्येमार्गं यस्य कस्यापि राजधानी प्रपद्येत सा खलु मनोविनोदाय नियमेन द्रष्टव्येति।

विद्या—भवतु, यथा लीलावती मन्यत इति।

द्वावपि स परिकरौ[4] लङ्गलवेणी[5] नाम जगद्बन्धुनरनायकस्य राजधानीमुपेयतुः।

तत्रापणेषु परितो विततीकृतानि
रत्नान्ययत्ननिहितानि वणिग्व्रजानाम्।
आलोक्य यानि पथिका हृदयान्तराले
सम्भावयन्ति भुवनानि तदुज्झितानि ॥ १७ ॥

विद्या—प्रिये! एषाष्टदुर्गनृपतेः राजधानी निरीक्ष्यताम्।

लीला—(सर्वतो दृष्टिं प्रसार्य्य सानन्दम्) नाथ! अत्र यत्र कुत्रापि विश्रम्य नित्यकृत्यानन्तरं सम्यगेनां अवलोकयामः।

इति किंचिद्[6]गत्वा निखिलधरणीपरिगतबहुविधचमत्कारकारिसमस्तवस्तुवास्तुनो नानादिगन्तवास्तव्यपथिकजनमनोरथानल्पकल्पपादपस्य लङ्गलवेणीनामकस्य नगरस्य मध्ये कृष्णकाननानामनि चूतारामे प्रविश्य प्रतिपर्वप्रचुरतरतरुण[7]दलकुलकवलितदिनकरकरनिकरसंचारे मन्दमन्दभ्रमरमधुमधुरकेतकसौरभभररभसचञ्चलचञ्चरीकतयानुगायमान[8]मलयमारुतसम्बन्धगन्धबन्धुरे अनवरतनिरन्तरायनिपतित[9]चूतमुकुलकुलकल्पिततल्पतलजनितशिशयिषालोलखेलाकुल[10]पथिककुलसंकुलमूलसीमनि क्वचन भूतले स्वर्ग इव[11] विश्रम्य प्रियामवादीत्—लीलावति! सुकृतिनः खलु अमी लङ्गलवेणिवासिनः।

---

1. घ—चार्द्धातिरेक
2. क, घ—क्षणोरपि चीयमान
3. च—चरणैकदेशरण
4. क—सपरिकरो
5. च—लाङ्गणवेर्णा
6. ङ—किंचद्दूरं
7. क—चतुरतरतरुण
8. ङ—० चयानुगायमान
9. ङ—निरन्तरावनिपतित
10. क, ङ, च—स्वेदाकुल
11. ङ—तरुतले भूस्वर्ग इव

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

येषामयं परिसरे प्रमदानुबन्धी
धत्ते सुखं[1] नृप इवैष रसालसालः ।
आस्तां किलास्य फलसौरभवस्तुवार्त्ता
छायापि दुर्लभतमा नगरान्तरेषु ॥ १८ ॥

इत्युक्त्वा तत्र वसतिं निबध्य रघुनाथसागरं नाम कासारमुपेयतुः ।

विद्या—प्रिये ! इयं वापिका, यथेष्टमवगाह्यताम् । यतः—

यत्र[2]प्रविश्यैव कृतावगाहा मुञ्चन्ति पान्थाः श्रममध्वलब्धम् ।
किं वच्मि मे मज्जनतो[3]ऽङ्गकानि पीयूषपूरैरिव संगतानि[4] ॥ १९ ॥

लीला—तथैव जलमवगाह्य आप्यायितान्तःकरणा प्रियमवादीत् , नाथ ! पश्य पश्य,

चक्रं नक्रादभीताऽप्यनुसरति रसाच्चक्रवाकी वराकी
फुल्लत्कह्लारपुञ्जे मिलति[5] सहचरं वीक्ष्य हंसी रिरंसुः ।
गुल्मान्तः[6] कैरविण्याः प्रसरति निनदः कोऽपि कारण्डवीयः
कङ्काः पङ्के सशङ्कं शफरकवलने केवलं ते वलन्ते ॥ २० ॥

विद्या—सखि ! धन्यः स खलु राजर्षिप्रतिमप्रभावो रघुनाथहरिचन्दनजगद्देवः यस्येयमचेतनापि वापिका तुङ्गतरतरङ्गापदेशेन स्वर्गमार्गाय निर्मितसोपानपरंपरा[7]मिव दर्शयति । इत्थं स्नानं समाप्य तत्र तरुमूले पाकादिभोजनान्तंकर्म निर्वर्त्य क्षणं सुप्त्वा अपराह्णे नगरीनिरीक्षणाय बद्धश्रद्धौ बभूवतुः । तदनु—

वीथीं वीथीमयमुपगतो द्रष्टुमिच्छुः[8] पुरीं तां
भ्रान्त्वा भ्रान्त्वा तदनु परितो वीक्षमाणोऽद्भुतानि ।
स्मारं स्मारं निजदयितया सङ्गतो हन्त रिङ्गन्
हट्टे घट्टोदयि[9]निजघटे मागधो मन्दमन्दम् ॥ २१ ॥

1. ख—कथं
2. ख—यतः
3. च—सज्जनतो
4. च—सज्जितानि
5. ङ—मिलित
6. क, घ—गुल्फान्तः
7. घ—परस्परा
8. ङ—द्रष्टुकामः
9. च—पट्टोदयि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—नाथ ! अपि तादृशी नगराणां समृद्धिः क्वचिद् बहुदृश्वानो महाभागस्य दृष्टचरी ?

विद्या—नहि नहि सखि ! सत्यं ब्रवीमि ।

काञ्ची काञ्चनशालिनी परिचिता काशी विकाशीकृत-
प्रासादा परिशोलिताप्यभिगता सद्मस्विनी[1] हस्तिनी ।
क्षोणीमण्डनमेव कुण्डिनपुरी दृष्टापि हृष्टप्रदा[2]
काचिन् लङ्कश्रेणिवन्मनसो हर्षः प्रकर्षं दधे[3] ॥ २२ ॥

लीला—कुत्रेदृशी परिपाटी पण्याजिरेषु । तथाहि निरीक्षताम । इतोहि हीरकमूल्यादिप्रस्तावः[4] । इतो हैरण्यपरीक्षा । इतः कुप्यादि[5]प्रणयनम् । इतश्चित्रकम्बलसंचयः । इतो भोजनभाजनानि । इतः करकानिकरः । इतो विविधवस्त्रापणः । इतो गोधनपरिवृत्तिः ।

इति नानाविधवस्तुविस्तारमवेक्ष्य इत इतो भ्रमन्ती लीलावती—( दूरादुच्चैः प्रासादमालोक्य सविस्मयम् ) कस्यायं प्रासादः किं कर्तृकः कियत्कालीनः किमर्थं कृत इति पृच्छामि ।

विद्या—प्रिये ! न जानसि ? अर्थिजनहरिचन्दनं[6] रघुनाथहरिचन्दनम् । यः खलु जगत्पूज्यत्वेन विविच्य गजपतिना जगद्देवपदवीमासादितः ।

लीला—ततः किम् ?

विद्या—तेन यदा यन्निमित्तमयं प्रासादः कृतस्तत् सान्वयं निशाम्यताम् । सखि !

पूर्वाद्रेरिव[7] रामचन्द्रनृपतेर्लब्धोदयं चन्द्रमा-
देवी यं शुशुवे सुधाकरमिव प्राचीकलाकोमलाम् ।
यस्य द्वावनुजौ महार्गलभुजौ[8] धूतारिभूमीभुजौ
तत्रैको भुविविश्रुतो गिरिधरः श्रीदिव्यसिंहो परः ॥ २३ ॥

---

1. क—सद्मस्विनी
2. क, घ—दृष्टापि हृष्टप्रजा
   ङ—हृष्टापि हृष्टप्रजा
3. ङ—काचिल्लङ्कश्रेणितेव
   मनसो हर्षं न मे त्यजति
4. घ, ङ, च—इतो हीरकादि मूल्यप्रस्तावः
5. क—कृष्यादि
6. ङ, च—हरिचन्दनं
7 ङ—पूर्वाब्धेरिव
8. च—मदार्गल भुजौ

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च

यस्य प्राणसमा समा गुणगणैः[1] श्रीपार्वती प्रिया
जातो [illegible] सुतः किल [illegible] ।
[illegible]
[illegible] ॥ २४ ॥

स्त्रीणां मोहनमन्मथो रिपुजनता प्रत्यर्थिनामर्थिनां
कल्पद्रुः सुधियां सुधाकरकला भूमण्डलीमण्डनम् ।
सोऽयं श्रीरघुनाथनामनृपतिर्लक्ष्मीपतिप्रीतये
शाकेऽब्दे खशरर्त्तुशीतगुमिते प्रासादमासादयत् ॥ २५ ॥

कालवशाद्दैवदोषेण[2] तस्मिन् स्वर्गाधिरूढेऽधुना ततः शतगुणेन गुणाधिको जगद्बन्धुनामा तत्तनयो नरपतिः प्रजापालनपरः पृथिवीं धर्मेण प्रशास्ति ।

लीला—महाभाग ! किं गुणकोऽयं महीपतिः यः किल एतादृशप्रासादवापिकानिर्मातुरपि रघुनाथहरिचन्दनाच्छतगुणाधिक[3] इति आर्यपुत्रो भणति ।

विद्या—प्रिये ! शौर्य्यगाम्भीर्य्यचातुर्य्यमर्य्यादा[4]निधेस्तस्य गुणेषु यदि श्रोतुं श्रद्धा निबद्धाऽस्ति तर्हि श्रूयताम् । सखि !

यदीयबाहुद्रविणातिरेकजं
प्रतापमुष्णद्युतिमेव मन्महे
द्विषद्वधूनामिह कज्जलाविलां
यदश्रुधारां यमुनामजीजनत् ॥ २६ ॥

किं च—

यस्यैकस्य पलायमाननिखिलप्रत्यर्थिसीमन्तिनी-
बाष्पाम्भःस्नपितावनीरुहनवोन्मीलत्पलाशाशिनः ।
सान्द्रानन्दपरिप्लुताः प्रतिवनं शारङ्गशावा मिथो
वाञ्छन्त्यन्तरहर्निशं भुजयुगद्वन्द्वाय भद्रं मुहुः ॥ २७ ॥

1. ङ—गुणैः
2. ङ—वेषेण
3. च—शतगुण
4. ङ—Omits 'मर्यादा'

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

य एकवीरः प्रसभेन[1] विद्विषां
निकृन्त[2]शीर्षैरिव केलिकन्दुकैः[3] ।
असृक्प्रवाहैरनुरागशालिनीं
विनोदयामास भुवं वधूमिव ॥ २८ ॥

अपरं च—

यत्तेजोऽनलदह्यमानदयितं संस्थापयन्त्यन्तरे
[4]सार्द्रान्तःकरणेन योगवशतो धूमैः समुल्लासिभिः ।
अस्त्रेषूच्छलितेषु[5] वैरिवनिता निधूमताहेतवे
तं प्रज्ज्वालयितुं चिरात् किमधिकं श्वासानिलान्मुञ्चति ॥२९॥

अन्यच्च—

स्वयं विसिस्मापयिषुर्जगज्जनान् सदैव यः प्रस्फुटपञ्चशाखतः ।
अनल्पदात्कल्पतरोर्निजाङ्कुजाद्वहिर्व्यधात् कीर्त्तिपयःपयोनिधिम् ॥ ३० ॥

सखि ! स च—

एकोऽयं सकलेष्टकृद्रसमयो विभ्रज्जगत्प्राणतां
प्रायो विष्णुपदं शुचिर्विरचयन् भूराजहंसस्थितिम् ।
रूपाण्यष्टविधानि भूधरभुवो भर्त्तुर्निधत्ते किमि—
त्यन्तश्चिन्तयता व्यधायि विधिना मन्येऽष्टदुर्गेश्वरः ॥ ३१ ॥

सखि ! किमहं वर्णयामि । स च—

दण्डे दण्डधरो बले बलरिपुर्योऽभूत् क्षमायां क्षमा
शक्तौ शक्तिधरो धनेषु धनदो गङ्गासुतः मङ्गरे
सौजन्ये जनको दमेऽपि सनकोऽनङ्गो निजाङ्गद्युतौ
धर्मे धर्मसुतो गुणेषु गुणिनां सर्वेषु शर्वोपमः[6] ॥ ३२ ॥

इति जगद्बन्धुहरिचन्दनजगद्देवगुणानुवादपरतया रजनीमतिवाह्य प्रातरुत्थाय कियद्दूरं गत्वा ऋषिकुल्यानदीतीरे पित्तलग्रामे प्रविशतः ।

1. क—सप्रसभेन
ङ—प्रसवेन
2. ङ, च—निकृत्त
3. ङ, च—० कङ्कैः
4. च—सान्द्रान्तः
5. ङ—शस्त्रेषु छलितेषु
6. ङ—सशर्वोपरः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—प्रिये ! गङ्गाप्रतिरूपा महानदी ऋषिकुल्या, प्रणम्यताम्। या किल पुरा वृत्रासुरत्रासतः परित्राणमिच्छता पुरन्दरेण दधिचीऋषेः कुल्यैः कुलिशं निर्मायानुपयोगितया[1] परिहृतेभ्य[2]स्तदसारखण्डेभ्यः स्यन्दमानेति तथाविधानभागिनी निर्वृत्ता।

लीला—एषा एतादृगुत्पत्तिविशिष्टा यदि तर्हि महामहिमशालिन्यपि भवेदिति तर्कयामि।

विद्या—कः सन्देहः ? एषा हि

पीता तापमपोहते स्मृतिपथं नीता च सूते शुभं
विश्रब्धैरुपसेव्यते यदि तदा स्वर्गापवर्गं कियद्।
दृष्टा दृष्टिपथं पुनाति विषये स्पृष्टा धुनीते स्पृहां
का भूयादृषिकुल्यया सखीसमा स्रोतस्वती भूतले ॥ ३३ ॥

लीला—साष्टाङ्गं प्रणमति।

विद्या—ततः सपरिकर एव ऋषिकुल्योपकण्ठे पित्तलग्राममध्युवास।

लीला—नाथ ! कस्यायं विषयः यत्र वर्त्तामहे ?

विद्या—( स्मृत्वा सानन्दम् ) प्रिये ! नलराजकुलप्रसूतस्य प्रभूतगुणशालिनो जयसिंहनामनृपतेर्दोदण्डचण्डिमखण्डितभयो[3]धराकोट नामा जनपदः।

लीला—तर्हि सोमवंशतया शुद्धक्षत्रियोत्पन्नो जयसिंहनृपतिः कीदृग् गुणशालीति शुश्रूषुरस्मि।

विद्या—प्रिये ! अवश्यं श्रोतव्यो भव्यतरकाव्यनिर्माणपटुगुणार्णवत्वादिव महारम्भगाम्भीर्यसंभृतः सुचरितशाली[4] शालीनवृत्तं गुरुविप्रदैवतेषु विभृज्जयसिंहनाम नृपतिः।

किं च—

यत्र ज्यां मधुपागते प्रतिनृपा ज्यामुत्सृजन्ति क्षणा-
द्यस्मिन् विक्रमभाजितेऽपि समरे सद्यो भजन्त्यार्जवम्।
यस्मिन् कुण्डलिते तु कुण्डलरुचिं मुञ्चन्ति तद्भीरवो
जीयाच्छ्रीजयसिंहसिंहनृपतेस्तत्तादृशं तद्धनुः ॥ ३४ ॥

---

1. ङ—निर्माय न स्पयोगितया
2. च—परिसृतेभ्य
3. घ—दोर्दण्डचण्डिमा भुजदण्डप्रतापः तेन
   खण्डितं निष्कासितं भयं यस्य तथाभूतः ( पुस्तिकाटीका)
   ङ—भुयो
4. ख—सुरचितशाली

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

युद्धेऽनर्गलनादभञ्जार्गलगलत्काण्डार्गलाखण्डित-
प्रत्यर्थिक्षितिपालवीरवरणव्यापारलीलाजुषाम् ।
हर्षादप्सरसां कुलैरपि मिथः स्पर्द्धातिगर्धाकुलैः
हस्ताहस्तिमयः पुरन्दरपुरे प्रारम्भि कोलाहलः ॥[1] ३५ ॥

किं च—

रणाद्बहिर्भूय महीध्रकन्दरे
निलीय संचिन्त्य यदीयमार्गणाम् ।
यथैव कीटो[2] वहति द्विरेफतां
तथाऽरयो मार्गणभावमाययुः[3] ॥ ३६ ॥

[ अपरं च—

दिग्वासःपुरतः समित्पितृवने यत्कीर्त्तिरेषा नटी
नृत्यन्ती लभते स्म चेतनमितो वासांसि तास्ता दिशः ।
तेनातुष्टतया नगारिनगरे नागेन्द्रपुर्यामहो
भ्राम्यन्ती नवमाससाद वलयं रत्नाकरान्तं भुवः ॥ ३७ ॥[4]]

लीला—नाथ ! पुनः पुनरभिधीयतां जयसिंहनृपसौष्ठवम् ।

विद्या—( सखि ! सकलकल्याणगुणगणशालिनोऽस्य परं जीवनमेवाशास्यम्[5] । इत्युक्त्वा ) सखि !

जाग्रज्जह्नुसुताजलोज्ज्वलयशा यो दुर्जनोज्जासको[6]
ज्यानादोर्जितं निर्जितारिवनितां[7] नीराजनामर्जयन्[8] ।
जानानो जनरञ्जनां जनयितुं यावज्जगन्मण्डली
जीवातुर्जयसिंह नाम नृपतिर्जैवातृको जायताम्[9] ॥ ३८ ॥

---

1. ङ—Ms. only reads this verse
2. ङ—कोटी दधाति
3. ङ—मार्गणतामुपेयुः
4. ङ-Ms. only reads the bracketed portion. and the following after the 37th verse—

किं च—

न यः स्मयते तृणमेकमानने
मृधे सुधांशित द्विभूमयोत्सवः ।

5. घ—जीवनमेवास्यं
6. च—ज्झासनो
7. ङ—जनिता, च—जनता
8. ङ—राजितुः, च—मार्जयद्
9. ङ—जीयताम्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—महाभाग ! राजापि भव्यकाव्यनिर्माणपटुरिति श्रुत्वा चकितास्मि ।

विद्या—प्रिये ! कविरिति किमुच्यते यस्यैवमनुशयः ! अहो,

मात्सर्येण वृथा मुधा[1] परगिरां दोषेषु तोषावहा
राज्ञामज्ञकथानुबद्ध[2]मनसां तत्रास्तु केनादरः ।
कस्योदेतु[3] मुदे मदाकुलवधूबिम्बाधरप्रस्फुर-
न्माधुर्यप्रतिधुर्यमामकवचश्चातुर्यतौर्यत्रिकम् ॥ ३९ ॥

लीला—( सहर्षम् ) धन्यः कविरेवायं जयसिंहनृपतिः यस्येदृशी वाक्परिपाटी कर्णामृतमिव प्रतीयते । किमुक्तं किमुक्तमिति तदेव भूयो भूयो निगद्य अभिनन्दति[4] ।

विद्या—प्रिये ! किमिति विस्मयसे ? कविकुलावतंसस्य रामचन्द्रसिंहनृपतेस्तनुजन्मनस्तस्य पटीयसी-कविताभटी नात्यद्भुता ।

लीला—तर्हि पारम्पर्येणापि कवितामाधुरीधुरीणा एते महाभागाः ।

विद्या—अथ किम् ।

लीला—नाथ ! जयसिंहनामकस्य नृपतेः कवितावर्णनोत्कलिका[5] मम तदनुशयवाग्विलासेनैव निराकृता ।

इति तदीयगुणानुवर्णनानुमोदेन रजनीमतिवाह्य तदनु कियद्दूरं गत्वा खिमुण्डिजनपदं प्रविश्य अपराह्णे पाटपुरग्रामोपवने प्रविशतः ।

लीला—( तत्र प्रविश्य ) नाथ !

भ्रान्तं महीतलमशेषमिदं मयाद्य
देशाश्च तत्र कति वा न विलोकिता मे ।
देशः क एष रमणीयगुणानुबन्धी
चेतश्चमत्कृतमिवातनुतं मदीयम् ॥ ४० ॥

अपि नामार्यपुत्रस्य विदिततरः कस्यायं जनपदः ?

---

1. च वृथा मुधा
2. ङ—कथानुविद्ध
च—कथानुबन्धि
3. च—कस्पोदेतु
4. क, घ—अतिनिन्दति
5. ङ—कर्णनोत्कलिका

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( स्मित्वा ) प्रिये ! यद्दर्शनमहोत्सवानुभवलोभपरवशा सती प्रहगृहीतेवाऽस्मि तस्यातितुङ्ग-गङ्गवंशकरीराङ्कुरायमाणस्य पुरुषमात्रदुर्गमहिमतया पुरुषोत्तमनामधेयस्य चक्रवर्तिचूडामणेरनङ्ग-भीमदेवनृपतेरुद्दण्डदोर्दण्डचण्डिममहिम्ना अकुतोभया जगदाश्चर्यनिदानभूता एता भूमयो मम करामलकी कृता एव। किं बहुना—

> विप्रोऽथ वन्दी मगधो नटो वा
> दारिद्र्यदोषा भुवि याचका ये ।
> तैस्तैर्न कैः श्रीपुरुषोत्तमस्य
> प्रभोरलिन्दः शतशोऽन्वभावि ॥ ४१ ॥

लीला—( सहर्षम् ) महाभाग ! किमुच्यते, अपि स एवायं जनपदः यत्र किल पुरुषोत्तमदेवनृपतिः सिंहासनमध्यमध्यास्य धर्मेण प्रजाः पालयति ?

विद्या—अथ किम्।

लीला—( श्रुत्वा सरोमाञ्चम् ) नाथ ! ऋषिकुल्यामहिमोदयोऽप्यवाङ्मनसगोचरः, यन्मया चिरमपि। संकल्पितदुर्लभो गङ्गाप्रवाहवहारामपवनः[1] पुरुषोत्तमदेवस्य सान्निध्यदर्शनसंलापजनितः सम्बन्धोऽपि सन्निहित एव समजनि। तेन तदपि तदवगाहकृतसुकृतफलमित्यवैमि।

इत्युक्त्वा तौ दम्पती[2], महाभाग ! अभिधीयतां, प्रिये ! अभिधीयतामिति मुहुर्मुहुर्भाषमाणौ तद्गुणाकर्णनवर्णनपरौ मार्गश्रममप्यगणय्य परमानन्दपीयूषपूरमग्नाविव निवृत्तान्तःकरणौ चिरं बभूवतुः।

विद्या—( पुरतः काञ्चिनदीमालोक्य )[3] प्रिये ! एषा नदी ऋषिकुल्याद्भिन्ना अश्वकुल्या नाम। अत्रत्याः पुनर्देशभाषया घोड़ाहाड़ेत्येनां व्यपदिशन्ति।

लीला—महाभाग ! किं निबन्धनमस्या अश्वकुल्याभिधानं ज्ञायते चेन्निवेद्यताम्।

विद्या[4]—प्रिये ! अत्रास्ति महती कथा। पुरा किल प्रचण्डचण्डकरतेजःपुञ्जमसहमाना संज्ञानाम्नी देवी अर्कसंपर्कभयात्[5] वड़वा भूत्वा मर्त्यलोके चरन्ती तदवगच्छता स्वरूपिणा[6] देवेन सवित्रा

---

1. ङ—गङ्गाप्रवाहवत् परमपावनः
2. च—reads दम्पती तत्र स्थितौ,
3. क—omits the bracketed portion
4. ङ—Ms reads सविमर्शं after विद्यार्णवः
5. ङ—भिया
6. ङ—तत्र भवता अश्वरूपिणा

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

संभुज्यमाना नासाविवराभ्यां नासत्यौ जनयित्वा प्रियप्रेमपरवशान्नरगीरं परित्यज्य स्वधिष्ण्यमास्थितवती। तदस्थिकूटस्यन्दमाननिस्यन्दरूपतया[1] इयमश्वकुल्येति विदिता। एषापि सुरभितीरतया[2] गङ्गायाः सूर्यप्रियाशरीरप्रभवात्वाद् यमुनाया अन्तःसलिलतया सरस्वत्याः अंशेनावतीर्णा।

लीला—( सचमत्कारम् ) नाथ ! तर्हि अत्रावगाढ़स्य त्रिवेणिस्नानफलमपि संभाव्यते[3]।

विद्या—( बाढ़मित्युक्त्वा नदीतः पानीयमानीय पीत्वा मुखं प्रक्षाल्य प्रियायै शेषं समर्प्य ) प्रिये।

बलिसदनगतायाः हाटकाद्रेः सुधायाः[4]
किमु मधुरिमपाकोद्रेक[5]वल्लीप्ररोहः।
तृषितपथिकवृन्दानन्दसन्दोहहेतु-
र्वपुरिव तव शीतं पीतमानीतमम्भः ॥ ४२ ॥

लीला—( स्मयमाना पयः प्रगृह्य पाणिपादमुखं प्रक्षालयन्ती प्रियमाह ) नाथ ! सत्यम्। स्वतः साधु[6]शीतमपि महाभागकरसरोजसंपर्कप्रतियत्नवशादनिर्वचनीयगुणमिदमिति परस्परानन-वीक्षणेन हसतः।

विद्या—( किञ्चिदाप्यायितः सन् सर्वतोऽवलोक्य ) प्रिये ! पुष्पसमयसम्बन्धबन्धुरत्वात् कीदृशोऽयं चूतारामः।

लीला—नाथ ! अहमपि,

विरहिहरिणश्रेणीवक्षोविदारणदारुणान्
किमरुणतया रक्तेनाक्तान् पलाशपलाशिनाम्।
किमपि मुकुलान् व्यक्तीकुर्वन् नखानिव[7] सम्मुखे
विचरति महारण्ये मन्ये वसन्तमृगाधिपः ॥ ४३ ॥

---

1. ङ—तदस्थिजूटस्यन्दमानिनः स्यन्दरूपयो
   घ—तदस्थिकूटस्यन्दमाननिस्यन्दमानरूपतया
2. क—सुचरिततीरतया
   ङ—सुरभिततीरतया
3. च—संभाव्येत
4. ङ—सुतायाः
5. च—० पानो
6. ङ—स्वादु ०
7. ङ—नखामिव

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

महाभाग ! पश्य पश्य,

अविरल[1]दलच्छायैः स्फारैः परस्परसङ्गिभिः
शिशिरशिशिरान् भूमिभागानवशिष्य वितन्वतः ।
मरकतमणिश्रेणीश्रीमच्छदावलि[2]सच्छवीन्
परभृतगिरां नानाभङ्गीगुरूनभितस्तरून् ॥ ४४ ॥

विद्या—सखि !

मन्ये द्रागधुना निरीय मधुना पुष्पव्रजव्याजतो
निर्व्याजं जगतीपते रतिपतेः शस्त्राणि संचिन्वता ।
प्रत्युर्वीरुहजृम्भमाणमुकुलानामूलचूलं वह-
न्नारामोऽयमनङ्गसङ्गरकृते नालीकशालीकृतः ॥ ४५ ॥

( पुनरपि सानन्दम् )

मधुकरवधूपानागारं[3] मनोजविहारभूः
पिकवटुचटुस्वाध्यायाध्यापनार्हं महामठः ।
मलयमरुतां काराकारो[4] वसन्ततपोवनं
किमयमनघो[5] चूतारामस्त्वया न समीक्ष्यते ॥ ४६ ॥

लीला—महाभाग !

उन्मीलन्कलकोकिलाकलकलव्याजाड्डमड्डिण्डिमो[6]
निर्गच्छन्मधुपावलीकृतमहाझंकारशङ्खारवः ।
आविर्भूय समन्ततः सुमनसामामोदमापादयन्
चित्तोल्लासमहर्निशं वितनुतं सोऽयं वसन्तोत्सवः ॥ ४७ ॥

विद्या—( स्मरपारवश्येन पृष्ठतो निपतितान पथिकानवलोक्य सदयम् )—प्रिये !

1. ङ—अविरत
2. क—श्रीमच्छदामवलि
3. ख, च—गानागारं
4. च—कारागारो
5. ङ, च—० मनघे
6. ङ, च—० ड्डिमड्डिण्डिमो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

पश्यैते पथिकाः स्मरप्रणयिनीप्रार्चीनलीलाचल-
दृग्भङ्गालिङ्गनभङ्गिचुम्बनकलाचातुर्यचिन्ताभृतः ।
दुर्दैवाद्बकुले विकाशिमुकुले[1] सान्निध्यमभ्यासिता
भृङ्गारावचमत्कृता निजदृशं यच्छन्ति मूर्च्छन्ति च ॥ ४८ ॥

लीला—( तान् सकरुणं विलोक्य ) आर्यपुत्र ! इमे किमपि संलपन्ति ?

विद्या—( सावधानं शृणोति )

पथिकः—

मलयकुलाचल[2]जन्मा जनयति दाहं समीरणः किमिति ।
मन्ये रतिपतिसङ्गान्मधुरपि विषमाशुगो जातः ॥ ४९ ॥

अपरः—

सखे ! पवनदोषाः पुष्पशरे वृथारोप्यन्ते । तथा हि—

वहतो वियोगिदलनप्रवीणतां
दहतो मृदुत्वजडतागुणेन नः ।
मलयानिलस्य[3] किमु साहचर्यतः
कुसुमाशुगोऽपि विषमाशुगोऽजनि ॥ ५० ॥

अपरः- किं वृथा प्रलपितेन, न जानासि ?

जगति महदुपाश्रितस्य जन्तोर्दधति विभूषणतां हि दूषणानि ।
मलयगिरिजुषां समीरणानामपि मृदुता जडता न किं गुणाय ॥ ५१ ॥

अपरश्च—( पवने कोपमाविष्कृत्य ) सखे !

यो गर्वान्मलयालयक्षितिरुहामुत्तुङ्गशृङ्गाङ्गणा-
दत्रागत्य मरन्दपिच्छिलतरे पातेन खञ्जीकृतः ।
आलम्ब्य क्षुपगुल्मयष्टिमधुना तं संचरन्तं शनैः
पश्यन्त्यो[4] जवनं हसन्ति पवनं पुष्पच्छलाद्वीरुधः ॥ ५२ ॥

---

1. ख—विलासिमुकुले
2. क—०मुकुलाचल
3. क, ख—मलयाचलस्य
4. ख—पश्यन्ती

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अपरः—सखे[1] !

भ्रमद्भ्रमरमण्डलीमुखरमाकन्दाङ्कुरे
मिलच्चटुलचन्दनाचलमरुच्चमत्कारिणि ।
विकस्वरपिकस्वरे मम वितीर्णकर्णज्वरे
[2]वसन्तसमये मया किमधुना विधेयं धिया[3] ॥ ५३ ॥

विद्या—प्रिये ! एषां परिषदि[4] मलयमारुते दोष एवोद्घाट्यते ।

लीला—एषामिवैतद्वधूनामपि इयमेव दशा जृम्भत एवेति मम मनसि स्फुरति । तथा हि—

उत्फुल्लनवकेतकादिसुमनःसम्बन्धगन्धोद्धुर-
भ्राम्यद्भ्रामरपुञ्जगुञ्जितमहाभेरीकृताडम्बरः ।
चण्डालातनुगर्जतर्जनमिव श्रोत्रेषु संपादयन्
किं किं नातनुते वियोगिसुदृशां वासन्तिको मारुतः ॥ ५४ ॥

विद्या—सखि ! सत्यमाह पथिकः । तथा हि—

मलयगिरितटीपटीरवाटी-
कुहरकुटीरकुटीव कायमानाः ।
कृतनिखिलनदीनदावगाहाः
सखि परितः प्रसरन्ति गन्धवहाः ॥ ५५ ॥

लीला—( सुखस्पर्शमभिनीय ) नाथ ! एष हि—

---

1. ङ—Ms. reads the following portion here

अपरः—सखे, सर्वं तु समीरणानां परोपतापि-
शीलत्वेऽपि अविवेकमूल एवायं वसन्त-
पवनापवादः ।

अपरः —(साक्षेपम्) किमुक्तम् । अरे बालिशः !

अपरः —रतिपति शराकुलानां
पथिककुलानां प्रमापणप्रवणः
कथयसि यमपदभागी
वसन्तवसन्तानिलादन्यः ।

अपरः —सचिन्तम् । सखे

2. ङ—वसन्ति

3. क—धियाम्

4. च—परिषवदि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मलयशिखरिशृङ्गप्राङ्गणे रिङ्गमाणो
हिमशिखरितटात् किं शैत्यमादातुकामः ।
प्रसरति पथि तान्तश्रान्तविश्रान्तहेतुः[1]
प्रतिदिशमतिधिरो मन्दमन्दं समीरः ॥ ५६ ॥

किञ्चायं समयः[2] !

यूनां विदूरगमनव्यसनोपरोधी
कन्दर्पदर्पतरुकन्दलमूलकन्दः ।
कुप्यद्वधूजनवशीकरणं गरीयो
मूर्च्छन्मनो[3] विरहिणीकुलधूमकेतुः ॥ ५७ ॥

विद्या—प्रिये ! पदे पदे पथिकानां विनिपातहेतुरेवायं वसन्तसमयः । तथा हि—

भृङ्गीभङ्गिरसालसामधुलवग्रासग्रहे लालसा
भृङ्गा भङ्गुरसौहृदाः सुमनसां सौरभ्यलोभोन्मदाः ।
गुञ्जन्तः कति मञ्जुवञ्जुल[4]लतामासाद्य माद्यन्त्यथो[5]
वासन्तीषु वसन्तके[6]ऽपि मुदितः स्वान्ता वसन्तागमे ॥ ५८ ॥

लीला—इतोऽपि प्रेक्ष्यताम्—

माकन्दे मकरन्दवृन्दमदिरामाकण्ठमिन्दिन्दिराः
मानन्दं परिपीय तुन्दिलतया मन्दा इव स्पन्दितुम् ।

किं च—

अत्रान्यत्र वनप्रियप्रियतमाश्चूताङ्कुरां श्चञ्चुभि-
श्चर्वन्त्यः कतिधा न चारुविरुतं कुर्वन्ति गर्वायितम्[7] ॥ ५६ ॥

विद्या—( किंचिन साकूतमिव ) प्रिये ! कठिनतमा हि कमिनीचित्तवृत्तिः । तथा हि—

---

1. च—कान्ति श्रान्ति विश्रान्ति हेतुः
2. क, ख—Mss. omits the line
3. क, ख—मूर्च्छन्मनो
4. च—मुग्ध वञ्जुल ०
5. च—माद्यन्त्यथो
6. च—वसन्ति के ०
7. ङ—मर्वायित

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

दाक्षिण्येनोपयान्तं[1] मलयजमरुतं हुं चिरादागतोऽसी-
त्युक्त्वा त्यक्तानुरोधं मधुकरविरुतैर्भर्त्सयन्ती रुषेव ।
आश्लेषं वारयन्ती स्वकरकिशलयं नैकधा किं धुनाना
वासन्ती वेपमाना त्यजति न बहुशः किं मरन्दाश्रुबिन्दून् ॥ ६० ॥

लीला—(भर्तुः परिहासपेशलतामवधार्य तत्रोचितमुत्तरमुपन्यस्यति) नाथ ! अचेतनानां तरुगुल्मलतादीनां मात्रमेव तत्[2] । वस्तुतस्तु मैथुनाहारवेदिनां मध्ये तु जुगुप्साधिकरणं हि पुरुषाचार (इत्युक्त्वा[3] पुरतो निर्दिश्य)—

स्वीयामत्र वनप्रियः प्रियतमामासाद्य चाटुं चरन्[4]
यश्चूताङ्कुरचर्वणाद्व्यरचयद्दाक्षिण्यदीक्षापटुः ।
सोऽभ्यर्णे मिलितां परप्रणयिनीं दृष्ट्वातिदुष्टाशयो
दैन्यं कीदृशमेति पश्य चपलं पुंसां मनो यादृशम् ॥ ६१ ॥

विद्या—( पुरो[5] दृष्ट्वा लज्जित इव )[6] इत्थमेव कौतुकालपनपरतया तयोः सायंसन्ध्या समदृश्यत । तथा हि—

अरुणं वरुणाशायामरुतां दृष्ट्वा पुनः पुनः करुणम् ।
व्यथिततरान्तःकरणो ब्रूतेऽसौ मागधीं मगधः ॥ ६२ ॥

सखि ! निरीक्ष्यताम् ।

नलिनभाविवियोगविपद्दृशा स्मृतिदद्धृदयान्तरनिःसृतैः ।
रुधिरबिन्दुभिराप्लुतो मण्डलो रविरभूदिवशोणतराकृतिः ॥ ६३ ॥

लीला—( अन्यथोत्प्रेक्ष्य ) नाथ !

दयितसंगमसत्वरचेतसां मृगदृशामतिकोपकषायितैः ।
नयनवारिरुहैर्यदुदीक्षितस्तदयमाप रविः किमु रक्तताम् ॥ ६४ ॥

विद्या—( भगवतोऽस्तमनहेतुमुत्प्रेक्ष्य ), प्रिये !

---

1. ङ—दाक्षिण्योपेतमेतं
2. ङ—कल्पनामात्रमेतत्
3. ङ—reads 'अङ्गुल्या' before 'पुरतो'
4. क—रचम्
5. ख—पुरतो
6. ङ—पुरो दृष्टो लज्जत इव

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

पूर्णमणिरेव दिवापि कुमुद्वती-
श्रियमतिप्रचुरां यदचूचुरत्[1]।
तदिह किं करकर्तनमियिवान्
बत बहिष्क्रियतेगगनालयात्[2] ॥ ६५ ॥

लीला—अहं मन्ये,

दिनकरः स्वकरेण सरोजिनीं
प्रणयिनीं सततं यदलालयत्।
कुपितदिग्वनिताभिरमी ततः
किमु नभोनिलयादपसारितः ॥ ६६ ॥

विद्या—(सपरिहासम्) प्रिये ! सूर्यास्तमनवर्णनेऽपि सर्वत्र भवत्या स्त्रीणां स्वभाव एवाविष्क्रियते। मन्मते तु,

वियदगारकमेष निभालयन्
तदनु तत्र निविश्य धृतोदयः।
समुपगृह्य च दिङ्निवहात् करान्
किमु पलायित भास्करतस्करः ॥ ६७ ॥

लीला—(सशोकम्[3]) नाथ !

निखिललोकगतागतकारणं विधिवलात्तरणिर्यदि नश्यति।
तदधुना विषमाशुगसागरे[4] प्रिय निमग्नमवेहि खगव्रजम् ॥ ६८ ॥

विद्या—सखि ! निरीक्ष्यतां, सायन्तनी सन्ध्या। एषा हि—

प्रलयमृच्छति[5] पङ्कजबान्धवे खगयुगेऽपि वियोगमुपेयुषि।
ज्वलति[6] तद्धृदये मदनानले[7] स्फुरति तस्य शिखेव पितृप्रसूः ॥ ६९ ॥

---

1. ख—यदरूचयत्
ङ—यदि चूचुरत्
2. क, ख—गगनतलात्
3. च—सशङ्कम्
4. क, ख—विषमाशुरम्य सागरे
ङ—विषमाशु सागरे
5. ङ—मिच्छति
6. च—ज्वलित।
7. ङ, च—मदनालये

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

( परितो अङ्कुरितं ध्वान्तं निभाय )

कलय खञ्जनगञ्जनलोचने
गगनवर्त्मनि लग्नमिदं तमः ।
किमु दिनाधिपनाशनिरर्गलं
वहति दिग्वनिताश्रुसकज्जलम् ॥ ७० ॥

लीला—( तदेवानेकधा[1] तर्कयन्ती ) नाथ !

धृतशरीरमिवाम्बुजपातकं
किमिव कामकिरातवरूथिनी ।
उत विटेक्षणसिद्धरसाञ्जनं
जयति दिक्षु विदिक्षु ततं तमः ॥ ७१ ॥

विद्या—प्रिये ! एवं नहि ।

मुकुलिते[2] परितो नलिनव्रजे[3]
तदुदरोत्थ[4]मधुव्रतमालया ।
जगदिदं यदभून्मलदूषितं
तदुदिताः किमु नीलिमसंपदः ॥ ७२ ॥

लीला—नाथ ! पुलिनोदरे निभाल्यताम् ।

अपि स्वप्राणेशं सविध्रमनुसुप्तं तत इतो
विहस्ता मृग्यन्ती क्षणविरहविभ्रान्तहृदया ।
अमूचीभेद्येऽस्मिन् तमसि पुनरन्धेव विकला
पुरः केलीहंसी करुण[5]करुणं कूजति मुहुः ॥ ७३ ॥

( पुनः सानुकम्पम् ) नाथ ! इतः—

विरहानलमेदुराशया मृगयन्ती दयितं[6] दुराशया ।
मिषतामपि शोकदायिका[7] करुणं कूजति कोकनायिका ॥ ७४ ॥

---

1. च—तदेवान्यथा
2. च—मुकुलितो
3. ख—नयनव्रजे
4. ङ—तदुदरोषि
5. ङ—करिश्च
6. च—दयितां
7. ङ—नायिका

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( सपरिहासम् ) प्रिये ! भवत्या सर्वत्र सर्वेषामपि सङ्गमप्रकार उपन्यस्यते ।

लीला—( स्मित्वा ) नाथ ! स्वरूपं वर्णयन्त्या मम कोऽयमवर्णः ?

विद्या—प्रिये !

चक्रव्यूहविगर्हितानि नलिनैर्धिक्कारमासादिता-
न्यध्वन्यध्वग[1]कुत्सितानि निखिलैर्निर्भर्त्सितान्युच्चकैः ।
किं त्वेकं[2] कुलटाकुलैरभिहिताशीर्वादगीर्भाजनं[3]
नेत्राण्याशु विलुण्ठयन्ति परितो ध्वान्तानि शान्तानि नः ७५ ॥

लीला—( सहर्षम् ) नाथ ! प्रेक्ष्यताम् ।

ध्वान्तं जर्जरयंस्तमोऽतिमलिनां दिङ्मण्डलीं मार्जयन्न-
म्भोजान्यपि[4] तर्जयन् कुमुदिनीसंदोहमावर्द्धयन्[5] ।
पूर्वक्ष्माधरकन्दरोदरपरीरम्भं शनैर्वर्जय—
न्नानन्दं तनुते चकोरचषकः सोऽयं सुधादीधितिः ॥ ७६ ॥

विद्या—( ऊर्द्धमालोक्य सोल्लासम् ) प्रिये !

यो वन्दीकृतविप्रयोगिनिवहस्तन्वन् कलाकौशलं
त्रिभृद्धीरुरुचि[6] कुरङ्गकमलासङ्गीसुधामोदितः ।
हेमश्रीरुचिराम्बरस्तत महानक्षत्रमालाश्चितो
जीयादेष सदारमा[7] नवनवामोदं दधानो विधुः ॥ ७७ ॥

लीला—प्राणेश ! पश्य,

आशोल्लासकराश्चकोरपटलीसंकल्पकल्पद्रुमाः
स्पर्शादेव पुनः पयोधिपयसां वाचालताहेतवः ।
[8]हृष्यत्कैरविणीकुरङ्गनयनाचाटुक्रियाचञ्चवो
जृम्भन्ते परितो वसन्तरजनीमुन्निद्रचन्द्रांशवः ॥ ७८ ॥

1. च—० ध्वग्न ०
2. च—त्वेवं
3. च—शोपाङ्कनं
4. ड—० भोजान्यपि
5. ड—मावर्जयन्
6. च—रुचं
7. क, ख—० रमा
8. ड—कुप्यत्

विद्या—( दृष्ट्वा सहर्षम् )

स्वकरकरजैर्मानक्रव्यं हृदो हरिणीदृशा—
मयमपहरन्नङ्कन्यङ्कुत्विषा शवलीकृतः ।
प्रकटितवृहत्तारादंष्ट्रो विलोकितबालधी
रुचिरमचरत व्योमारण्ये मृगाङ्कमृगादनः ॥ ७६ ॥

किं च सखि !

पुरो दिगवतंसकः सुरतरङ्गिणीहंसक—
श्चकोरकुमुदासवः सलिलराशिनीरासवः ।
परं प्रणयलोलुपप्रियतमाभिसारोत्पत[1]—
ज्जनीजनविघातको[2] रजनिजानिरेषोऽजनि ॥ ८० ॥

लीला—आर्यपुत्र !

लङ्कास्त्रीणामनिष्टः सहजगुणगणैर्जैत्रलक्ष्मीं दधान—
स्ताराकान्तानुसङ्गी कृतकुमुदमुदापत्तिरुत्तीर्णवार्धिः ।
मद्धर्मा रामचन्द्रो रजनिचर[3]तमोऽनीक[4]मात्त व्यलीकं
हन्तायं नैति हन्तुं किमु करनिकरानीकनालिकजालैः ॥ ८१ ॥

इत्यन्योन्यकृतालापरमलालसचेतसोः ।
तयोस्तस्मिन्नुपवने विभातैव विभावरी ॥ ८२ ॥

इतिश्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजिकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
सप्तमः परिच्छेदः[5] ।

---

1. च—प्रियतमार्त्तिसारोत्पत
2. च—विपातको
3. छ—रजनीचर
4. ङ—तमोलीकं
5. च—Adds समाप्तिमगमत् after this

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# [1]अष्टमः परिच्छेदः

तौ मागधौ तत्र निशावसाने विहङ्गतुङ्गध्वनिलब्धबोधौ ।
समाप्य नद्यामथ नित्यकृत्यं मध्येपथं दिक्पहणीमुपेतः[2] ॥ १ ॥

तदनु तस्य दुर्गस्य पत्तने प्रविष्टौ तौ दम्पती, सर्वे सादरं पश्यन्ति ।

लीला—नाथ ! पश्य पश्य,

सिन्दूरसुन्दरविशाललाटपट्टे चन्द्रार्द्धचारुकनकाभरणं वहन्त्यः ।
दुर्वर्ण[3]हारहृदया मदने भवार्यः पश्यन्ति कौतुकयुता वहिरार्यनार्यः[4] ॥ २ ॥

विद्या—( ताः प्रति सकौतुकम् ) प्रिये !

एतासां वदनाम्बुजे स्मितकला ग्रीवातटे भङ्गिमा
चाञ्चल्यं नयनाञ्चले कुटिलता सख्यादि[5]नर्मोक्तिषु ।
निर्हेतुः पथि पान्थविश्रमकथासम्भावनासम्भ्रमोऽ-
प्येकैकं पथिकावरोधनविधौ दुर्लङ्घ्यमार्गाचलाः ॥ ३ ॥

लीला—( सलज्जमिव मुखे चेलाञ्चलमाधाय गवाक्षमूले पश्यन्तीं काञ्चिदवलोक्य )[6] प्रियं परिहसन्ती प्राह, सुभगोत्तंस ! एषा—

लौल्याद्गवाक्षविवरे गलितां स्वदृष्टिं
त्वद्वीक्षणक्षणसुखादिव लब्धपुष्टिम् ।
उत्तार्य नेतुमसमर्थतया परत्र
नो याति नान्यदपि पश्यति किं करोतु ॥ ४ ॥

---

1. ङ—Reads गङ्गवंशानुचरिते &
   च—reads श्रीरस्तु अथ before अष्टमः
2. ङ—दिक्पहण्डोमुपेतौ, च—दिक्प्रहणीमुपेतौ
3. क—सुदुवर्ण ०
   ख—दुर्विर्ण ०
4. ख—वहिरर्यनार्यः
5. ख—संखादि
6. ङ—Ms. omits the bracketed portion

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

आत्रेयाः केऽपि वात्स्याः कतिचिदथ पुनः केऽपि निर्द्धूतकल्मषाः
कौत्साः संभूतिभाजः कति कुशिककुले केऽपि शार्गीतवंशे ।
भारद्वाजान्ववाये कति च कति पुनः काश्यपाः काश्यपीया
देवाः के वा प्रमोदादपिकलितहृदः संघशो नावमन्ति[1] ॥ ६ ॥

ततो ब्राह्मणानामकुतोभयत्वं जानपदानां च परमसमृद्धिमालोकयन्ती लीलावती-(भर्तार-मुद्दिश्य ) नाथ ! क्षितितलराजन्यान्तरेभ्योऽप्यन्या पुरुषोत्तमदेवस्य प्रजापालनपरिपाटी ।

विभा—प्रिये ! अहमपि

दृष्ट्वा जानपदान् तपोऽर्जनपरान् दीनं दयाशालिनो
दाने मानपुरःसरान् जनयतः मर्त्येऽपि नित्यादरम् ।
मन्ये श्रीपुरुषोत्तमक्षितिभृता लोकान्तरात्स्यांप्रतं
धर्मद्रु विषये स्वके भुवि बलादुत्पाट्य[2] संरोपितः ॥ ७ ॥

( पुनरपि सोल्लासम् )

कीदृशी प्रजापालनचातुरी अनङ्गभीमदेवस्य कीदृगीयं जनानां निरुपद्रवता कीदृक् स्वधर्म-परत्वं चातुर्वर्ण्यस्य कीदृशी महोत्सवशालिता गृहे गृहे स्नातकानां ! तथाहि—

केऽप्यान्दोलितकुण्डलाः कतिपये केयूरबन्धोऽज्ज्वला
हारधारमहोरसः कतिपये कोटीरकोटीजुषः ।
नानाचित्रविचित्रसौधपटली[3]भूमध्यमध्यासिनः
सानन्दं विहरन्ति हन्त परितो लोका विशोकादमी ॥ ८ ॥

ततो लीलावती नातिदूरे लीलावनमवेक्ष्य—नाथ !

प्रोद्यत्तालतमालपूगपनस[4]द्राक्षारसालावली-
संवाधात्स्फुटमञ्जुवञ्जुलवनी[5] सौरभ्यसम्भारिणी ।
फुल्लत्केसरनागकेसरघटाझंकारभृङ्गोद्भटा
भूरेषा किल केलिकाननमयी दृष्टिं हठात्कर्षति ॥ ९ ॥

---

1. च—ऽभ्यावमन्ति
2. छ—भ जबलादुत्पाट्य
3. च—भूम्यह ०
4. क, च—पनसा
5. च ० मञ्जुकञ्जुलवर्ना

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तदनु विशेषतया सुरपुरीशाङ्कामङ्कुलितपरिखाकपटोपनतस्वर्गङ्गा[1] लिङ्गितायास्तदम्बु- भाभिभ्यास्तद्गीतानिभीतिवशादिव प्राकारप्रावारपरिवेष्टितायाः रिपुकुल[2]नासीरचरदीशामात्र- दन्त[3]दन्तुरदन्तावलकुलविमर्द क्षमकपाटपुटसंकटायाः स्वतो विकटाया[4] राजधान्याः प्रथम- कक्षामैक्षेताम ।

तत्रान्तरे सपदि यष्टिहस्तं दौवारिकद्वयमन्तिकमागत्य—महाभाग ! कोऽसि[5] कुत्रत्यः कुत आगतोऽसि ? यदि कर्णाटदेशीयो विद्यार्णवनामा सगर्भेन्द्रराजो भवसि तर्हि देवेनाज्ञाप्तोऽसि राजधानीं निश्शङ्कं प्रविश्यताम ।

नहि अपरश्चेदसि[6] तर्हि क्षणं विलम्ब्य किं नामकः कुतः आगतोऽसि निवेद्यतां, राज्ञे वयं विज्ञापयाम इति क्षितिपतिर्व्यजिज्ञपत ।

विद्या—(तच्छ्रुत्वा सविस्मयम्) दौवारिक ! विद्यार्णवश्चेदसि राजधानीं प्रविश्यतामिति यदुक्तं तत्र संशयानः पृच्छामि—विद्यार्णवागमनं कथं देवेनावधारितमिति ।

दौवारिकः—प्रतिदिनस्वविषयगतनानाविधवृत्तान्तविज्ञापनाय नियुक्तैश्चरैरतितेऽहनि विज्ञापनावसरे[7], देव ! अद्य तव पाटपुरग्रामोपवने विद्यार्णवनामा कर्णाटदेशीयो सगर्भेन्द्रराजः प्रविष्टः ।

स च श्रीमत्पुरुषोत्तमक्षेत्र[8]गतगङ्गवंशनृपतिचयवितायमानयशःपुञ्जमञ्जुलप्रासादशत- विलोकनविस्मितया तत्कुलविमलकमलबन्धुनिरुपमगुणनिवहसिन्धुभवद्दिदृक्षाग्रहिल[9]हृदयया प्रियया सह देवपादमूलमागच्छतीति देवे निवेदितम् ।

तच्छ्रुत्वा हुं, मद्दिदृक्षुरेवायं प्रसिद्धनामा विद्यार्णवः प्रियया सह कियद्दूरमायातीति सानन्दकौतुकं आवामाहूय दौवारिकौ प्रियया सहागच्छन्तं विद्यार्णवं निरुन्ध्यास्ताम । अवरुद्धश्चेत कदाचित् खिद्येदिति राज्ञाऽऽज्ञप्तौ स्वः,. यदि स एवासि तर्हि विज्ञापनमन्तरेणापि पुरीं प्रविश्यताम ।

1. च—स्वर्गङ्गया
2. ङ, च—रिपुबल
3. च—दत्त
4. ग—Omits 'स्वतो विकटाया'
ङ—विसंकटया
5. ख—कोऽपि
6. ङ, च—अपरश्चेत् कश्चिदसि
7. क, ख, ङ, च—omit विज्ञापनावसरे
8. क, ख, घ—omit the word
9. ङ—ग्रहित
च—ग्रसित

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( सस्मितोषम ) प्रिये !

बुद्धं बुद्धमनङ्गभीमनृपते रीतिः पुनः कीदृशी
राष्ट्रोपान्तमुपागतान् कलयते चारेण यश्चक्षुषा ।
आस्तामस्य विदूरतो वितरणं सम्भावनाशुम्भता[1]
कीदृक् सौष्ठवनिष्ठया परमहं सद्यः कृतार्थीकृतः ॥ १० ॥

[ इति नृपते राष्ट्रगतं तात्पर्य्यमवधार्य तत् प्रशंसाशंसनपरौ मागधौ द्वारस्योपान्तं प्राकारमालोकयतः ।

विद्या—][2] प्रिये !

विशालः सालोऽयं वरतनुदुरारोहणतया
कदाचिन्न क्लीवो जन इव पराक्रान्तविषयः ।
प्रकृष्टाकारत्वात् गगनतटमुल्लिख्य निवस-
न्न किं प्राकारत्वं निजमनुगतार्थं कलयते ॥ ११ ॥

लीला—(पन्थानमभितः पार्श्वद्वये[3]परिस्फुटां परिखामालोक्य ) नाथ ! कीदृग्गाम्भीर्यशाली नदीद्वयमुभयतो दृश्यते ।

विद्या—( स्मित्वा ) प्रिये ! नहीदं नदीद्वयं किन्तु परेषामाक्रमणशङ्कानिवारणाय क्लृप्ता[4]परिखा राजधानीं परितः परीत्यवर्त्तिं ।

लीला—( सानन्दविस्मयम् ) नाथ ! अहं विमृशामि एषा राजधानी—

दृष्टेयं स्मयशालिदुर्ज्जनशतक्ष्माखण्डसंसर्गतो
धन्याहं पुरुषोत्तमक्षितिपतेरासत्तियोगाश्रयात् ।
तन्नैषा निखिलक्षमा मम पुनः स्पर्शाय नैव क्षमा-
मत्वेति व्यवधिं व्यधात्परिखया मध्येभुवश्चात्मनः ॥१२ ॥

1. ख—शुम्भता
2. ङ—Ms omits the bracketed portion
3. क, घ—पार्श्वद्वयो
4. क, घ—क्लृप्ता

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—प्रिये ! धन्यासि,

तस्मिन्नेकगुणप्रवाहजलधौ क्षोणीन्द्रवृन्दाद्भुते
चञ्चच्चित्रचरित्रशालिनि रमा कान्तांघ्रिपद्माश्लिनि ।
धर्मेण क्षितिपालनव्यसनिनि[1] प्राप्तप्रकर्षान्तरे
तत्तादृक् गुणवर्णनेन वलते यत्तावकीनं मनः ॥ १३ ॥

लीला—नाथ ! ईदृश निखिलनरनायकनिकरकरकमलोपलालितचरणारविन्दयुगले क्ष्माभृति कस्तादृक् पशुभूतो न रमेत ।

विद्या—सखि तव किमायत्तं, तस्य महिमातिरेकसम्बादवावदूकं नामधेयमेव निखिलसम्वदनम् ।

लीला—सत्यमाह महाभागः ।

विद्या—प्रिये ! विचिकित्ससे यदि तर्हि सत्येन शप्त्वा ब्रवीमि ।

ये देशाः परिशीलिता नियुतशो नानादिगन्तोज्ज्वाला
ये वा भूपतयो मया नयनयोर्लक्षीकृता[2] लक्षशः ॥
देशास्तेषु तदा व्यलोकि न पुनः कश्चिदुखिमुण्डीसदृक्
तेषामेवमनङ्गभीममदृशः कश्चिन्नृपो नेक्षितः ॥ १४ ॥

( इत्युक्त्वा द्वारि प्रविश्य ) प्रिये ! पुरतः

या कार्ष्णाय सनील[3]कीलकशतैर्नीरन्ध्रमाच्छादिता
मध्ये धारकदारुपर्वसु मिलन्नानामणिमञ्जुला ।
यागतीन् गलहस्तयन्त्यविरतं नानांशु[4]धाराकरै-
स्तामेतामरंरद्वयीं सुनयने सम्यक्किमालोक्यसे[5] ॥ १५ ॥

( पुनः पार्श्वतोऽवलोक्य सहर्षम् )—

1. क, ख—व्यसनिनि
2. ख—लक्ष्मीकृता
3. ङ—कार्ष्णार्यसनील ०
च—० सकील ०
4. ङ—रत्नांशु ०
5. क, ख—सम्यक् मिमा लोकयसे
च—सम्यक् समालोकसे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

एतस्या निकटे घटस्तनिपटु[1] प्रारम्भमत्युत्कटं
मार्गाभ्निर्गलितं महार्गलयुगं कीदृग्दरीदृश्यताम् ।
मन्ये श्रीपुरुषोत्तमक्षितिपनिर्दोर्दण्डयुग्मद्वह-
स्त्वा द्वारि विलोकयन्निव पुरं[2] जागर्त्ति रक्षाकृते ॥ १६ ॥

इत्युदीर्य्य द्वारदेशमतिक्रम्य पुरस्तादाग्नेय्यां दिशि महाशिलापृष्ठप्रतिष्ठितं महारम्भ-स्तम्भकुलसम्भृतं गुण्डिचामण्डपं विविक्तमालोक्य निवासाय तमेवाध्युवास ।

लीला—( तदुपरि निविश्य स्वच्छन्दं सर्वतो [3]नगरसंपदमालोक्य प्रियं प्रति ) महाभाग !

स्नात्वेवामृतवापिकाम्भसि पुरीं गत्वेव पौरन्दरीं
लब्ध्वे वाम्बुरुहासनस्य सदनं कैलासवासादिव ।
ध्यात्वा ब्रह्मपरं[4] समाधिविधिना कृत्वेवसाक्षादहो
दृष्ट्वेमां नगरीं समास्य परमानन्दोदय: कीदृश: ॥ १७ ॥

किं वहुना, अस्या विलोकनेन स्वर्गापवर्गविवादास्पदं श्रीपुरुषोत्तमक्षेत्रं मम मनसो नावरोहति ।

विद्या—प्रिये ! भद्रं भणसि, यत: पुरुषोत्तमराजधान्या: पुरुषोत्तमराजधान्येवोपमानं भवितुमर्हति ।

लीला—( गुण्डिचामण्डपं दक्षिणे[5] निरूप्य ) नाथ ! इत: प्रेक्ष्यताम् ।

प्राय: सौरभचौरमन्दमरुता दोधूयमानाम्बुज-
स्तोमा कौतुकदायिनी नयनयोरानन्दसन्दायिनी[6] ।
अध्वश्रान्तनितान्ततान्तजननातापापनोदक्षमा-
वापी कापि निरीक्षिताऽध्वगकुले हर्षोदयं वर्षति ॥ १८ ॥

विद्या—प्रिये ! एषा किल भगवतश्चन्द्रनयात्रानिर्वाहाय केनापि खानिता वापिका चिरकालमेवमेवास्ति । ( सकौतुकम् ), पश्य इह हि—

---

1. ङ—घटस्तनिपूट
   च—घनस्तनिपट्ट
2. ख—निजपुरं
3. ङ—नगरी o
4. क, घ—ब्रह्मपुरं
5. ङ, च—दक्षिणेन
6. घ—सन्धायिनी

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

कश्चिन् खञ्जनलोचनाः कति पुनः फुल्लारविन्दाननाः
काश्चिन् सुन्दरकुन्दवृन्दरदना निर्गत्य पौराङ्गनाः।
आनेतुं सलिलं सलीलमधुना सम्भूय वापीतटे
कुम्भग्राहमितो मिलन्ति शतशः पुञ्जीकृता यूथशः[1] ॥ १९ ॥

( तादृशरं[2] निर्वर्ण्य ) प्रिये !

नानाभङ्गिमनाधुरीषु नगरीवासो न कां चातुरीं
सद्योऽध्यापयति स्फुटं मृगदृशश्चातुर्यचर्चागुरुः।
ये नैतापि वाह्यकर्मनिरता वाह्यान्त्यजारीतयोऽ-
प्येकैकं नवनागरैकसुगमं वैदग्ध्यमातन्वते ॥ २० ॥

लीला—नाथ ! पुरुषोत्तमदेवस्थानङ्गभीमदेवपदस्पृशः पूर्वपुरुषान् सविशेषं श्रोतुकामास्मि।

विद्या—प्रिये !

प्रयत्नतो वा गणयेदुडूनि संख्यापयेद् वा[3] धरणीरजांसि।
न गङ्गवंशक्षितिवल्लभानां चिरेण केनापि गुणा गणेयाः ॥ २१ ॥

तथापि ते मानसतोषहेतोः
काश्चिन्नृपान् वच्मि यशोऽम्बुराशीन्
येषां विशेषादभिधाभिधानं
पुनाति पापाकुलितात्मनोऽपि ॥ २२ ॥

लीला—नाथ ! एवं यदि तेषां नामापि पावनतमं तर्हि कस्य शुश्रूषा नोदयेत् ?

विद्या—सखि लीलावति ! पावनरमणीयचरितशालिनो गङ्गवंशनृपतीन् यदि शुश्रूषुरसि तर्हि आमूलमावेदये, निशम्यताम्। सखि ! ओड्रदेशे[4] कटकराजधानीमध्यास्य,

गङ्गान्वये प्रथमतोऽजनि देवषट्कं
संजज्ञिरे तदनु षड्बलिनो नृसिंहाः।
षड्भानवोऽप्युदयसंपदमापुरेव
मष्टादशाऽजनि षड्क्षितिपाः[5] क्रमेण ॥ २३ ॥

1. ङ—यूथपाः
2. ङ—माश्चर्यं
3. क—संख्यापयेर्धा
4. च—ओण्ड्र०
5. ङ—पत
च—पत्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( सपरितोषम् ) नाथ ! समस्याभिहितेऽपि तस्मिन् पट्कत्रिके कः कीदृक् किं नामा कियन्तं कालं क्षितिं शशासेति प्रत्येकं विविच्य निरूप्यताम् ।

विद्या—( स्मित्वा ) प्रिये ! यद्येवमागृह्णासि तथैव निवेद्यते । अवधीयताम् । तत्र—

देवेषु चाविरभवत् प्रथमं चुड़ङ्गो
यं चौडगङ्ग[1] इति केचन निर्दिशन्ति ।
धीमानसौ सहजबुद्धिबलोदयेन
सिंहासनं गजपतेः स्वयमध्युवास ।। २४ ।।

अस्यैव चौडगङ्गस्य[2] वंशो गङ्गवंश इति क्षितौ ख्यातिमापत् ।

[ परे तु विधवाया गङ्गाभिधायाः कस्याश्चिद् ब्राह्मण्या महादेववरप्रसादाद्यः पुत्रोऽभूत् तद्वंशो गङ्गवंशः । तत्रेश्वरांशप्रभवत्वात् सर्वेऽपि लोकोत्तरगुणशालिन इति मन्यन्ते । तदसत् । तथा सति गङ्गावंश[3] इति स्यान्न गङ्गवंश इति । ][4]

लीला—ततः ?

विद्या—प्रिये !

प्रजारक्षादक्षः क्षत[5]बहुविपक्षोऽक्षतयशाः[6]
सरोजाक्षोऽभिख्याजितमदनलक्ष्योऽक्षमतगः[7] ।
सदा चातुर्वर्ण्ये प्रतिनियतधर्मान् प्रचुरयन्
चतुःसप्तत्यब्दान् समजनि चुडङ्गो नरपतिः ।। २५ ।।

लीला—नाथ ! चुडङ्गदेवस्य बुद्धिमत्तानुसारिणी भाग्यवत्ता गरीयसीति प्रतीमः ।

विद्या—कः सन्देहः ? श्रूयतां, स्मर्य्यते हि बुद्धिः कर्मानुसारिणीति ।

लीला—( चुडङ्गचरितं चिन्तयन्ती विस्मयमानेव पुनरपि विद्यार्णवमुद्दिश्य ) नाथ ! चुडङ्गदेवस्य साहसिक्यमपि कीदृशं येन परानपेक्ष्य गजपतिमुत्सार्य्य तत्सिंहासनमध्यास्य विहृतम् ।

विद्या—प्रिये ! पाक्षिकफलमपि साहसं फलोन्मुखप्राचीनकर्मणां पुंसां पुनः सिद्धफलमेव भवति ।

लीला—ततस्ततः ?

---

1. क, च—गौडगङ्ग
2. च—गौडगङ्गस्य
3 क—गाङ्गवंश
4. क—Omits the bracketed portion
5. च—क्षिति
6. ध—० यशाः
7. ङ—०ऽक्षमगतिः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—ततश्च—

तस्याविराम तनयो भुवि यश्च राज—
राजेश्वरोऽखिलनृपान् भुजयोर्बलेन ।
आज्ञाप्य साधु निजनाम दधे यथार्थं
भूमिं शशास शरदः[1] सुभगेऽङ्कसंख्याः ॥ २६ ॥

लीला—नाथ ! तर्हि चुडङ्गदेवात्मजो राजराजेश्वरोऽपि नववर्षाणि केवलं पृथिवीं शशास ।

विद्या—नोचेत् किम्[1] ।

लीला—नाथ ! हुं ततः ?

विद्या—

तस्यासीत्तनुजः सदैव दनुजद्विट्पादपाथोरुहे
भृङ्गः सङ्गरपण्डितोऽप्रतिरथः क्षुण्णारिभूभृद्रथः ।
नाम्ना चातिरथो गुणैकजलधिर्निःसीमधीमत्तया
वित्तो भूमिपतिर्नभोमुनिमितानब्दा[2]नशाद्भूतलम् ॥ २७ ॥

लीला—नाथ ! अतिरथदेवे सप्ततिवत्सरान् पृथिवीं पालयित्वा दिवमारूढे तदनन्तरोदयिनं राजानं जिज्ञासुरस्मि ।

विद्या—तदनु—

तस्यात्मजः सः पुनरेकजटी पदान्ते
यं कामदेव इति पूर्वविदो वदन्ति ।
प्रासादमेव जगदीशितुरप्रमेयं
प्रारभ्य तातसमयं धरणीं शशास ॥ २८ ॥

लीला—तर्हि अतिरथदेवात्मजेन बृहत्प्रासादं प्रारभ्य एव गतम् ।

विद्या—अथ किम् ।

लीला—नाथ ! तर्हि केन समापितः ?

विद्या—उच्यते सखि, तस्यापि

दधन्[3] कुसुमधन्वनो द्विगुणरूपलाभोदयात्
प्रपद्य भुवनोदरे मदनकामदेवाभिधाम् ।
बभूव तनयो नयोचितपथानुयायीक्षमां
शशास स नृपाग्रणीस्त्रिथिरमाः समा धर्मतः ॥ २९ ॥

1. ख, घ, च—भूमिमशासत्स शरदः
2. ख—० नत्वा ०
3. ङ—वसन्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

पित्रारब्धं तदनु सदनं ब्रह्मणो दारुमूर्त्तेः
पूर्णं कर्त्तुं स च कृतमतिर्धर्मशास्त्रानुसारात्।
नो वा रात्रौ न खलु दिवसे शिल्पीविश्रान्तिदायी[1]
प्रासादेऽर्द्धावधिविरचिते संहृतो मृत्युनाभूत्॥ ३०॥

लीला—किमुक्तम्? तर्हि एकजटोकामदेवसूनुना मदनकामदेवेनापि देवालयो न निर्व्यूढः?

विद्या—प्रिये! बहुकालसाध्यं तादृशं कर्म निर्मातुं कलियुगान्तरवर्त्तिनां चक्रवर्त्तिनामप्येषामायुः कियदिति ज्ञात्वापि किमिति चकितेव पृच्छसि?

लीला—सत्यं, ततः?

विद्या— तस्यासीत्तनयो भगीरथ इव प्रेयान् प्रजानां पुनः
पूर्वेषां परमार्थसाधनपटुर्योऽनङ्गभीमाह्वयः[2]।
संपूर्णं जगदीश्वरस्य निलयं निर्माय निर्मत्सरो
राज्यं प्राज्यममौ कलासमसमा धर्माद्दतो निर्ममे॥ ३१॥

तदानीं तु—

अङ्क[3]क्षोणिशशाङ्केन्दुसम्मिते शाकवत्सरे।
अनङ्गभीमदेवेन प्रासादः श्रीपतेः कृतः॥ ३२॥

लीला—नाथ! पृच्छामि, मदनकामदेवात्मजे अनङ्गभीमशब्दास्पदे[5] गतवत्यपि इदानींतना गुडारि-कटकवासिनः सर्वे भूपा यदनङ्गभीमपदभाजो भवन्ति तत्र किं बीजम्?

विद्या—प्रिये! किमसांप्रतं, तस्य शब्दस्य प्रवृत्तिनिमित्तबलात् तद्विधेषु तद् व्यपदेशो युज्यत एव।

लीला—तर्हि तच्छब्दस्य किं प्रवृत्तिनिमित्तम्?

विद्या—न जानासि?

यो जातः[4] स्मरभीमसंशयकरः सौन्दर्य्यशौर्य्योदयात्
कस्मादेवमनङ्गभीमपदवीं बिम्बोष्ठि नालम्बताम्।
अत्रान्येषु तथाविधेषु च ततः शब्दप्रवृत्तेः पुन-
र्हेतौ जाग्रति मा कुतो न घटतां चन्द्रानने चिन्त्यताम्॥ ३३॥

---

1. क, च—विश्रान्तदायी
2. घ—० त्वयः
3. ङ—अर्क
4. च—जारः
5. ख—अनङ्गशब्दास्पदे
घ—अनङ्गदेवशब्दास्पदे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( क्षणं विचिन्त्य ) नाथ ! उपपन्नमेतत् । ततः ततः ?

विद्या—सखि ! अथ देवानन्तरभाविषु सिंहेषु प्रथमतः

तस्मादासीन्नृसिंहो नृपतिरिति कृतीकोपनो यत्र कट्टे
स्पष्टं लाङ्गुलमाविर्भवति स च ततो नाम तत्पूर्वमापत् ।
यस्यारीणांचरोक्तं महिमनि महतो गाढमापीड्यमानं
मुष्टिद्वन्द्वं[1] न्यमज्जत्किल भुजवलिनो[2]घट्टितं राजपट्टे ॥ ३४ ॥

स च

श्रीशप्रासादवन्धाद्भुत[3]कृतिकृतिना[4]ऽनङ्गभीमेन राज्ञा
बद्धस्पर्द्धोऽतिमात्रं परमवनितले कीर्त्तिसंपत्तिलिप्सुः ।
कोणार्कक्षेत्रपृष्ठे विपुलतमगुरुच्छायमुत्माहशाली
सौरं प्रासादमेको व्यरचयदचिरान्नारसिंहोऽवतारः ॥ ३५ ॥

सोऽपि—

दृप्यद् दुर्जनसंघसंहृतिपटुः प्रत्यर्थिनिग्रन्थने
दक्षो दक्षिणसत्तमो गुणिगणे[5] सम्भृतसम्भावनः ।
पुत्रान् प्राणपणं पितेव परमप्रेम्णा प्रजाः पालयन्
क्ष्मापृष्ठे भसमाः समाः समतनोत्साम्राज्यमत्युर्जितम् ॥ ३६ ॥

लीला—यं लाङ्गुलनृसिंहदेव इति पुराविदो वदन्ति सोऽपि तर्हि गङ्गवंश्यः ?

विद्या—अथ किम् ।

लीला—ततः ?

विद्या—प्रिये !

तस्मादुद्दामबाहुद्रविणविदलितानन्तसामन्तनारी-
गुम्फद्वक्षोजकुम्भप्रसृमरमकरीप्रोञ्छनप्रौढलीलः ।
लिम्पन् दिक्चक्रवालं धवलतरयशश्चन्दनाम्भश्छटाभि[6]-
र्भूपृष्ठं नातपादैः समसमयमशाद्भीमपूर्वो नृसिंहः ॥ ३७ ॥

---

1. च—० द्वन्द्वे
2. च—० वलये
3. च—वन्धाद्भुतं ०
4. च—कलना
5. ख—गुणगणे
6. क—चन्दनाम्बुछिटाभिः
—चन्दनाम्बुच्छटाभि

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

स च—

पक्षं कंचन नेक्षते रणमुखे चापं च नापेक्षते[1]
नैवाशंसति दंशनं वितनुते सेनारसे नादरम् ।
उद्यद्दर्पमदोद्धुरोरुस्फुटतरास्फोटावधूतद्विषो[2]
यस्यासीदुपयोगशून्यमखिलं सांग्रामिकं वस्तु यत् ।। ३८ ।।

लीला—ततः ततः ?

विद्या—सखि !

एतस्मात् पुरुषोत्तमाक्षरपदे[3] विभून्नृसिंहाभिधां
जातो भूपतिरोद्रदेश[4]विसृतं[5] निःसीमदोर्विक्रमः ।
आशासम्मितवत्सरान् क्षितितलं भुक्त्वा च मुक्त्वा तनुं
क्षेत्रे श्रीपुरुषोत्तमे भगवतो भक्त्याभवत्तन्मयः ।। ३९ ।।

लीला—नाथ ! तर्हि पुरुषोत्तमदेवोऽपि दशवर्षाणि केवलं पृथिवीं शशास ।

विद्या—तावदेव ।

लीला—ततः ततः ?

विद्या—प्रिये !

तदनु निजमनु[6]प्रसन्नमूर्त्ते-
हय[7]शिरसोऽभिमतं वरं[8] प्रपन्नः ।
स च कवि नरसिंहनामधेयं
समजनयत् तनयं[9] नयानपेतः ।। ४० ।।

---

1. ख—नोपेक्षते
2. क—स्फोटावधूतादिशो
3. क—पुरुषोत्तमो सुनयने
   ख, घ—पुरुषोत्तमो क्षितिपदे
   ङ—पुरुषोत्तमोत्तरपदे
4. ङ—ंरोढदेश
   च—गोत्रदेश
5. क- निसृतं
   ङ—सुकृतं
   च—विसृतां
6. क—निजमन
7. ङ—वंय
8. च—रवं
9. ङ—समजनि यत्तनयं
   च—समजनि यं तनयं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

सोऽसौ तत्त्वसमाःसमा गजपतेरास्थाय सिंहासनं
भोगाभोगविनोदवानपि दधद्ध्यानैकतानं मनः[1]।
हित्वा धर्मविरुद्धमर्थमखिलं कामं च तादृग्विधं
लेभे ज्येष्ठपृथासुतस्य भुवने भूयोऽवतारप्रथाम्[2] ॥ ४१ ॥

लीला—नाथ ! इत्थं कविनृसिंहदेवे पञ्चविंशतिवत्सरान् राज्यं प्रशास्य गतवति तदनन्तरं ज्ञातुमिच्छामि ।

विद्या—प्रिये ! ततः—

तनयः[3] पुनरस्य मल्लयुद्धे विजयादप्रतिमल्लतां दधानः ।
अकटा अवटा नृसिंहदेवः पितुरेवाधिकमाददे[4] नृपत्वम् ॥ ४२ ॥

लीला—नाथ ! तर्हि अस्यापि राजत्वं सेश्वरसांख्यवादिनां[5] तत्त्वसंख्यासममेव ।

विद्या—वाढम् ।

लीला—ततः ततः ?

विद्या—सखि !

तस्यापि जातस्तनयः प्रतापनृसिंहदेवो युधि यत्प्रतीपाः[6] ।
न सेहिरे दोःप्रसरं स भूमिं समाः क्षमावह्निसमाः शशास ॥ ४३ ॥

तदनु—

इति विदितगुणे नृसिंहषट्के विरतिमुपेयुषि दैवदोषगत्या ।
जगति समयमेत्य भानवस्ते[7] न किमुदयं दधिरेऽपि षट्क्रमेण ॥ ४४ ॥

लीला—( सप्रश्रयम् ) नाथ ! भानूनामपि यो यादृशस्तत्सर्वं विस्तरेण श्रोतुकामास्मि ।

विद्या—भणामि, श्रूयताम्—

आदौ निश्शङ्कभानुः परमुदयमधात् दानशौण्डाधिकारे
यश्चासीदग्रगण्यो गुणिगणगणने यं पुरो भावयन्ति ।
यद्दोर्दण्डप्रतापादवनितलमभूत् सर्वथा निष्प्रकम्पं
गायत्रीवर्णसंख्याः स जगति शरदश्चक्रवर्तित्वमार्हत् ॥ ४५ ॥

---

1. घ—महः
2. ख—०ऽवतारं मनः
3. ख, घ, च—तनुजः
ङ—तदनुजः
4. ङ—०माददे
5. क, घ, च—सांख्यवादिनां मते
6. घ—युधिय
7. ङ—मानवेऽस्ते, च—भावनस्ते

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—ततस्ततः ?

विद्या—प्रिये ! ततः परं[1]—

अष्टाङ्गयोगपरिनिष्ठितचित्तवृत्तिः
सांसारिकैदु रवगाहपथैकपान्थः।
लोके विचक्षणविलक्षणधर्मकर्मा
तस्यात्मजोऽजनि जनैरनमीष्टचेष्टः ॥ ४६ ॥

लीला—नाथ ! स च किं नामा कीदृशश्च इति जिज्ञासुरस्मि।

विद्या—( स्मित्वा ) प्रिये ! सोऽपि,

मित्रामित्रकलत्रपुत्रजननीपित्रादि सर्वं मृषा
ज्ञानानन्दघनं[2] सदैवपरमं ब्रह्मेति निश्चित्य च।
तादृक्तत्त्व[3]पथानुयायिचरितं लोकेषु संदर्शयन्
सर्वैर्वातुलभानुरित्यभिहितो दुर्वारदुर्वासनैः ॥ ४७ ॥

किं च—

एतादृग्विषयानुबन्धिचरितो यो वेद मासाधिका—
नब्दान् भानुतुरङ्गलोचनमितानारूढसिंहासनः।
मौलामात्यनिवेशितक्षितिमहा[4]षाड्गुण्यचिन्तामरो[5]
दाक्षिण्येन निनाय कालमखिलं भोगे जुगुप्सावहः ॥ ४८ ॥

लीला—( सचमत्कारम् ) नाथ ! लोकानां बलीयस्त्वमनिर्वचनीयमेव ये किल [6]तत्त्वज्ञानिनमपि भानुदेवं वातुलयन्ति।

विद्या—प्रिये ! किं न जानासि, साक्षाल्लक्ष्मीमपि जनकनन्दिनीं रावणालयनिवासाभिशापेन दूषयन्तो जना बलीयांस इति।

लीला—सत्यमाह महाभागः, ततः ?

विद्या—सखि ! ततः तत्तनयोऽपि,

---

1. क—प्रिये, सोऽपि मित्रामित्रकलत्रा ततः
2. च—कामानन्दघन
3. च—तादृग्भव्यः ०
4. क—मौलामात्य शिरोनिवेशितमहा
5. च—चिन्तान्तरो
6. च—भव्य ०

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

पादं कुर्वन् क्ष्माभृत्कुलशिरसि वहन्मण्डलं रञ्जमानं
दोःशुष्मोष्मातिरेकी दिशि दिशि जनयन् योऽकरोदश्वनानि ।
सोऽसौ भुक्त्वैव भोगानृतुनयनमितान् वत्सरान् साङ्कमासान्
चण्डिम्ना स्वेन पङ्कानिव रिपुकुभुजोऽशोषयद्वीरभानुः ॥ ४६ ॥

लीला—नाथ ! सर्वापेक्षया वीरभानुः प्रतापीति प्रतीयते ।

विद्या—मया वा किमुच्यते, तन्नाम्नैव दत्तोत्तरं भवति ।

लीला—ततः ततः ?

विद्या—प्रिये ! अपरिमितगुणगणनया[1] पांशुलकण्ठनालस्य मम क्षणमात्रं विश्रम्याभिधाने कं दोषं पश्यन्ती भवति त्वरते ?

लीला—( स्मित्वा ) नाथ ! किं ब्रवीमि, एषां गुणामृतोद्गिरणेऽपि शुष्ककण्ठत्वमिति महदाश्चर्यम् । महाभाग !

प्रमुदितवसुधाभिर्निर्जितस्वः सुधाभिर्मधुमधुरपथाभिर्भूपतीनां कथाभिः ।
इह यदि तव कण्ठे शोषणं प्रादुरासीद्ध्रुवमपि भविता तद्घर्मतप्तः सुधांशुः ॥ ५० ॥

विद्या—( विहस्य ) तत्तादृग्गुणशतमधुरिमातिरेकलालसा भवतीमेतादृग्वाचालयति ।

लीला—भवतु यथा मन्यते, महाभागः ! ततः परं श्रोतुमिच्छामि ।

विद्या—
तस्यैवासीत् सुतनुतनयो धैर्यशौर्य्याम्बुराशि-
राशीभूतः सकलमहसामुद्धृतामित्रमात्रः ।
यावद्भुंक्ते गुरुरुपनतो राशिमेकं स तावद्-
भुक्त्वा भूमिं[2] रुचिकचरमो भानुरस्तं प्रपेदे ॥ ५१ ॥

[ लीला—नाथ ! तर्हि रुचिकभानुरपि त्रयोदशमासमात्रमवनीश्वरोऽभूत् ।

विद्या—अथकिम् । ][3]

लीला—नाथ ! ततः ततः ?

---

1. ङ—अपरिमितगंगवंश्यनृपतिगुणगणवर्णनया
2. ङ—भक्त्याभोगान्
3. ङ—Omits the bracketed portion

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—तस्यापि—

अजनि मधुपभानुर्भानुतेजास्तनूजो
निरवधिरणमत्तो[1] वीरपाणैकमत्तः।
रणरसरसिकत्वाद्[2]दूषणं यस्य तादृक्
सदसि सदसिवीरा भूषणं वर्ण्णयन्ति ॥ ५२ ॥

स चापि—

रामराममितानब्दान् राममासाधिकानपि
पृथिवीं पृथिवीपालः पालयामासधर्मतः ॥ ५३ ॥

लीला—नाथ ! तर्हि क्षत्रियाणां रणलालसतया विगर्हितं[3] निषिद्धमपि सुरापाणं न दोषाय भवति।

विद्या—अथ किम्।

लीला—ततः ?

विद्या—प्रिये,

तदनु नृपतिरस्मात् कज्जलाभानुरासी-
दहह मम विहर्त्तुं दानभोगान्धबुद्धेः।
कियद्दिनमिति[4] राज्यं प्राज्यमापादयिष्यन्
स च कटकनिरास्थो दिग्जयाय प्रतस्थे ॥ ५४ ॥

तदनु—

कृत्वा राज्यमकण्टकं किल समां कण्डुं भुजादण्डयो-
र्हर्त्तुं[5] निर्यति तत्र दिग्जयकृते दुर्वारदोर्विक्रमे।
शून्या यन्नृपनिर्गमेण सुचिरं सा राजधानी कृता
तत्तस्यां कपिलेन्द्रदेवमनघं भूपं न्यधुर्मन्त्रिणः ॥ ५५ ॥

लीला—( श्रुत्वा सकरुणं रसनां दष्ट्वा दक्षिणेन करेण वक्षो निहत्य ) नाथ ! एवं सति दिग्विजयोद्यतेन[6] कज्जलभानुना तदानीं किं प्रतिपन्नम् ?

---

1. क, घ—०यत्तो
 ङ—०यन्तो
2. क—अतिरणरसिकत्वर
3. ख, ङ, च—विहितं
4. ख, च—कियद्दिदमिति
5. क—हन्तं
 ख, ङ—हन्तुं
6. ङ—विस्मयोद्यतेन

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—स च वीराग्रणीः–

श्रुत्वा तं कपिलेन्द्रमात्मविपणे सिंहासनाध्यासिनं
मौलानामपि मन्त्रिणां कुचरितान्यालोक्य[1] रोषाकुलः ।
तद्धिक्कृत्य च दाक्षिणात्यनृपतिनुन्नार्ग्यवीर्योच्छ्रया-
द्राज्यार्थी प्रथमं गुडारिकटके वासाय चक्रे मनः ॥ ५६ ॥

किं च—

तदवधि मृगनेत्रे गंगवंशावनीशाः
स्वसचिवमतिदोषा[2]द्दोद्रदेशं त्यजन्तः ।
सकलनृपकिरीटोद्घृष्टपादारविन्दाः
सुचिरपथिकरीत्या दाक्षिणात्या बभूवुः ॥ ५७ ॥

लीला—नाथ ! अथ श्रीपुरुषोत्तमदेवपर्यन्तं गुडारिकटकनिवासिनो गङ्गवंशनृपतीन् शुश्रूषुरस्मि ।

विद्या—तदनु गुडारिकटकवासिषु कतिषु नृपतिषु गतेषु—

दाहोत्तीर्णसुवर्ण्णवर्णविलसत्कायश्रिया[3] स्वर्णतां
भानुत्वं च तथा प्रकल्प्य भुजयोरुद्दामशुष्मोष्मणा
यन्नामानुगतार्थमेव जनता जानीत एव क्षिता-
वासीद्गङ्गकुलावतंसचरितः श्रीस्वर्ण्णभानुर्नृपः ॥ ५८ ॥

लीला—नाथ ! किं गुणकोऽयं स्वर्ण्णभानुरिति पृच्छामि ।

विद्या—प्रिये ! स हि—

दोर्दण्डाकाण्ड श्रीकृत[4] रिपुदलनोद्दामकोदण्डदण्ड-
स्फूर्जट्टङ्कारटङ्कक्षतहृदयतयाऽतङ्कपङ्के निमग्नाः ।
शम्पासम्पातकम्पाद्द्रुतगति न गताः[5] कां दिशं कान्दिशीका
भूपा विध्वस्तरूपा वनभुवि निभृतं चौरचारं चरन्ति ॥ ५९ ॥

अयि लीलावति ! किं बहुना, स एवायं स्वर्ण्णभानु-

1. क—आलोच्य
2. ग—स्वसुचिवसतिदोषा०
3. ङ—काव्यश्रिया
4. ङ—प्रश्राकृति
5. क—०पतनिगताः
ङ—द्रुतशातिनगताः
च—०द्रुतगतिनगताः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

माालिन्यं प्रसरति काक[1]कोकिलादेः
प्रत्यक्षीभवति विधोः कलंकपङ्कः ।
रागः प्रस्फुरति मृगेक्षणाधराणां
वृक्षाणां भवति परं वियोगवार्त्ता[2] ॥ ६० ॥

किं च—

वीणानामपि परिवादसन्निधानं
पोद्यन्निर्दयकरपीडनं स्तनानाम्
पुष्पाणां मधुपचयप्रसक्तिलीला
हंसानामपि[3] विषदत्वमाविरासीत् ॥ ६१ ॥

किं च—

संजाता किल विटपावृत्तिर्नगानां[4]
भृङ्गाणामपि गणिकानुरागबन्धः ।
वाणानां[5] समिति बभूव पक्षपातः
प्रादीनां परमिहसूचकत्वमासीत् ॥ ६२ ॥

किं च—

द्वन्द्वानामजनि रतेषु बन्धलीला
संभूतः पटलसमुच्छ्रयो गृहाणाम् ।
संजज्ञे दिवसकृतः परोपतापो
यस्मिन् शासति धरणीं न तु प्रजानाम् ॥ ६३ ॥

लीला—नाथ ! ईदृग्गुणशालीनः स्वर्णभानोरनन्तरं नृपान्तरं श्रोतुमिच्छामि ।

विद्या—प्रिये !

लोकारिङ्गन्तुरङ्गे[6] रिपुधरणिभुजां कालमेवाजिरङ्गे
साक्षाद्धर्मस्वरूपं यममिव यमिमं शण्डमेवालपन्ति ।
सेषः श्रीकालषण्डः क्षितिपकुलमणिः स्वर्ण्णभानुप्रसूत-
श्चक्रे चक्रिप्रभावः क्षितिगतजनता पालनं लालनाभिः ॥ ६४ ॥

---

1. क, घ—कोक
2. क—स्वयोग वार्त्ता
   ङ—जयोगवार्त्ता
3. ङ—विगदत्व
4. ङ—लतानां
5. ङ—वीणानां
6. च—लोलालिङ्गत्तरङ्गे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अपरं च—सखि !

गौरेषा समुपेत्य कालवशतः सूते फलानि क्रमात्
येनाक्रम्य च केवलेन दलिताः केदाररक्षा व्यधुः ।
येनारिक्षितिपाललोलनयनावक्षोरुहक्ष्माधरे
पत्राली [1]मृदिताभयं न दधिरे के कालषण्डात्ततः ॥ ६५ ॥

किं च—प्रिये ! कालषण्डचरितानि पदे पदे विस्मयावहानि । तथा हि—

यत्सेना धूलीधाराजनितमपि तमो भानुमन्धं निरुन्धे
यद्दोर्दण्डप्रतापात् प्रसरति हृदये वैरिणामाशु कम्पः ।
यत्कीर्तिः कुन्दवृन्दद्युतिरपि कुरुते कालिमानं रिपूणां
कः शक्तो[2] वक्तुमीदृग्भवतु शुभवतस्तस्य चित्रं चरित्रम् ॥ ६६ ॥

प्रिये ! यद्यपि—

केऽप्युच्चैर्मन्त्रयन्तो निजबलमपरे रक्षितुं यत्नयन्तः[3]
केचित् सम्बर्मयन्तः कतिच[4] तरुलताकन्दमास्वादयन्तः ।

तथा हि—

युद्ध[5]श्रद्धाप्रवृद्धद्रढिमनिजभुजा[6]कृष्टकोदण्डनिर्य—
द्वाणासारप्रसारैर्यदरिनृपघटाश्छिन्नभिन्ना द्रवन्ति ॥ ६७ ॥

तदनु हि—

तस्याजनिष्ट तनयो विनयाङ्गसङ्ग-
मापादयन्निव नयोत्तररीतिशाली ।
दीने निवेशितदयो हृदयोढविष्णु-
र्जिष्णुर्द्विषश्च[7] समरेऽभिधया चुडङ्गः ॥ ६८ ॥

---

1. ङ—मृदुला
2. ङ, क—शङ्के
   च—किं शक्तो
3. क, घ—यन्त्रयन्तः
   ङ—यत्नयन्तः
4. क—कठिन ०
5. च—शुद्ध
6. ङ—०प्रतिमभुजबला
7. ङ—हृदयोऽतिजिष्णुः विष्णूपमश्च

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

एकः [1]पद्मद्विपाश्वाटविकचरघटा नाविकैरप्य[2]शून्यं
सैन्यं संन्यस्य भूमौ भ्रमति जयकृते[3] यः पदङ्गं चुडङ्गः।
सोऽसौ स्वासिं च धाराद्वदमयरसनाद्बन्दिनं[4] दन्दशूकं[5]-
कोषान्निःसार्य निर्यन्[6] समिति न कुरुते कस्य साशङ्कमन्तः ॥ ६९॥

अपरं च—

शरावलीदर्भसमूहगर्भिते महाहवे यद्रिपवोऽनुदीक्षिताः।
द्विजव्रजाय स्पृहयोपसेदुषे वपुर्द्धनं जीवनपूर्वकं ददुः ॥ ७० ॥

अन्यच्च—

अर्यम्णा स दृगतनुप्रदानदक्षो निर्दग्धारिपुरचयो विभूतिशाली।
श्रीकण्ठोऽखिलजननापहारिशीलो यो जज्ञे जगति सदाशिवस्वरूपः ॥ ७१॥

लीला—नाथ! अहं मन्ये, यथा यथा गङ्गवंशान् वर्णयसि ते तथा यदि तर्हि एतादृशं सुराजानं[7] विषयमहपहाय अन्यराजन्यराष्ट्रवासव्यसने जनाः किमिति व्याप्रियन्ते?

विद्या—तर्हि मृषावादिनं मामाह प्रियसखी।

लीला—नहि नहि। कथमीदृशं घण्टापथं परित्यज्य कान्तारे भ्रमन्तीति जिज्ञासामि।

विद्या—प्रिये! प्रायो लोकानां व्यवहृतिरज्ञानमूलतया सारासारविचारनिरपेक्षैव प्रवर्त्तते। तथा हि—

पुरः पित्रोः रेतःकललमथ पाके च पललं[8]
भवेत्तस्मिन्नासीद्वपुरिति जनानां व्यवहृतिः।
तदर्थेऽव्यग्राणां यदुकुलमणेर्विस्मृतिरहो
तुषे तोषं लब्ध्वा जहति कनकं मूढमतयः ॥ ७२ ॥

---

1. क—गदस ०
   च—पत्ति ०
2. ख—तत्र
3. क—नगकृते
4. क—० रसनाद् बन्धनं
5. क—द्वन्द्वशून्यं
   च—दन्तशूकं
6. क—धृत्वा
7. क—दुरात्मानं
8. क—पाकेन फललं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

संग्रामाङ्गणसङ्गिवारणघटागण्डस्थलीभेदन-
व्यापाराहृतकर्मकर्मठशराटोपः कलिङ्गाधिपः।
भीतो यच्चरणौ विहाय शरणं भूमौ न किंचित्परं
जानीते जनता जगज्जयपटुः सोऽयं चुडङ्गो नृपः॥ ७३॥

अपि च—

जातो धीरशिरोमणिः सुमनसामानन्दचिन्तामणिः
शत्रुक्षोणिकुमुद्वतीदिनमणिदोर्दण्डतेजोऽरणिः।
अभ्यस्ताखिलनीतिशास्त्रसरणिर्वीरेन्द्रचूडामणि-
र्यं भ्रातासमराग्रणीर्हरिमणि नाम्ना गुणग्रामणीः॥ ७४॥

लीला—नाथ ! अपि चुडङ्गानन्तरं तत्पुत्रः कश्चित् पृथिवीमशासत् किं वा तद्भ्राता हरिमणिरिति संदिग्धास्मि।

विद्या—प्रिये ! आनुपूर्व्याभिधीयते निशम्यताम्, किम्मिति त्वरसे ?

लीला—महाभाग ! गङ्गवंशनरपतिगुणानां दोषं किम्मिति मय्यारोपयसि[1] ये किल निजशुश्रुषां वर्द्धयन्तस्त्वरयन्ते।

विद्या—सत्यमाह भवती। तेषु हि—

त्रिजगति न पदं के कामिनां[2] कामनायाः
क इव न खलु पात्रं मानिनां माननायाः।
सुतनु न विषयाः के भाविनी भावनायाः

लीला[3]— कथय कथय तान्मे गङ्गवंशावनीशान्॥ ७५॥

विद्या[4]—अवधीयताम्। प्रिये, अवधीयताम्।

तत्पुत्रोऽजनि यो नृसिंह इति विख्यातः क्ष्मामण्डले
क्षिप्तारिक्षतजोत्करैः क्षितिमणि[5]क्षुण्णां क्षणात्क्षालयन्।
क्षोणीन्दुः[6]क्षमया क्षमामतिरतन् क्ष्मापालकोटीशिता
क्षीणाघः[7] [8]खलपक्षकक्षदहनः क्षेमार्थिनां क्षेमदः॥ ७६॥

---

1. क—त्वमप्यारोपयसि
   ङ—मत्वाऽरोपयसि
2. क, ख—कामिनां
3. Mss Omit this
4. Mss. Omit this
5. क, घ—ॐमणी
6. ङ—क्षोणीन्द्रः
7. ख—क्षीणायः
   घ, च—क्षीर्णा घः
8. च—खल

किं च—

सोल्लासं सुरचितराजमानभङ्गीं संसर्गात्प्रविदधतीं रजो विदूरे।
यो [1]गोत्राचरमहिपालयप्रभूतां स्वां सेनां प्रथयति देववाहिनीति ॥ ७७ ॥

किं च—

साध्वीनां[2] कलितदिशां[3] सदाश्रितोच्चै-
गोंत्राणामपि हितः नैकधा मदानाम्।
निःशेषं स्वमपरुषां[4] महीं च राज्ञां[5]
योऽरीणामवहत राजतां गुणौघैः ॥ ७८ ॥

अन्यच्च—

स्वभर्तृविच्छेदविशेषपाण्डरा-
रिपुस्त्रियो दुर्नयपाकवञ्चिताः।
वनान्तरे दिक्षु विदिक्षु सर्वतो
भ्रमन्ति मूर्त्ता[6] इव यस्य कीर्त्तयः ॥ ७९ ॥

एष क्षितिपतिः—

अज्ञानाद्विहितापराधकणिकासंमार्जनामर्जितुं
ये सद्यः प्रणमन्त्यरिक्षितिभृतस्तेषां निजस्थानतः।
प्रभ्रष्टं प्रपदेन मूर्द्धनि तथा कोटीरमासादय—
न्नुग्रानुग्रहमादधाति भुवने राजा नृसिंहः परं ॥ ८० ॥

किं च—

तस्यासीन्नरसिंहदेवनृपतेः शक्रो यथा विक्रमी-
पुत्रः कोऽपि दधद्गिरीन्द्रगुरुतामम्भोधिगम्भीरताम्।
दुष्टानां मशकस्तथाधिशमकः[7] पाकेन शिष्टाशिषा-
मानन्त्याद्गुणसंचयस्य भुवने[8] योऽनन्तनामाजनि ॥ ८१ ॥

---

1. घ—गत्रा ०
2. घ, ङ, च—स्वार्थीनां
3. घ—दशां
4. ङ—स्वमपरूषां
5. ङ—महीभराज्ञां
6. ङ—मूर्च्छा
7. ङ—शमकस्तथाऽधिगमकः
8. ङ—महतो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

आशाकाशान्तराले सुदृढगुणगणैर्गाढमावद्धमानं
शुभ्रांशुभ्राजिनानासिचयपरिचयात्कल्पितं शिल्पिनेव ।
येनानेनाजिरङ्गे त्रिभुवनभवना[1]भोगभूषाविशेषो
यत्कीर्त्तीनां वितानं जनयति जगतोऽमन्दमानन्दमन्तः ॥ ८२ ॥

किं च—

तस्यासीत् तनयो नयोज्ज्वलयशा सौभाग्यकेलीस्थली
सीमा सद्गुणशालिनां त्रिजगतीचातुर्यचर्याश्रमः ।
तादृक् शौर्य्यगुणार्यमोदयविधौ पूर्वाद्रिगर्वावहो
धैर्य्यौदार्य्यरमाश्रयोऽतिविनयी श्रीपद्मनाभाह्वयः ॥ ८३ ।

प्रिये ! स च नृपतिः -

अतिप्रतापी समयोपजापी दुष्टोपतापी हरिनामजापी ।
पीयूषवापी मधुरानुलापी कलाकलापी मुनि[2]रस्तपापी ॥ ८४ ॥

कुम्भिस्थः कुम्भिकुम्भस्थलगलितमदामोदपूरानुसारी[3]-
भ्राम्यद्भृङ्गावलीभिर्वियतिकृतमहार्केकिपत्रातपत्रः ।
तत्तादृक् चण्डचण्डद्युतिकरनिकरस्पर्शलेशानभिज्ञो
योद्धुं जानाति युद्धे क्षितिपकुलमणिः केवलं पद्मनाभः ॥ ८५ ॥

प्रिये ! दिग्जैत्रयात्रायां यात्रिकस्य किं वर्ण्णयामि । तथा हि—

दण्डं सौवर्ण्णमुच्चैः कलयदुदयते यस्य मुक्तातपत्रं
यस्यैकेनैव पीठं मरकतमणिना निर्मितं शर्मदायी ।
यस्यास्थानव्यवस्था न गुरुकविसुधाशालिनी किं सुधर्मा
यस्याज्ञा नैव राज्ञामुपरि परिपतन्त्यादृदे जातु भङ्गम् ॥ ८६ ॥

सोऽसौ विश्वम्भराख्यः क्षितिपकुलमणिर्विश्वविश्वम्भराया
भूपाभूतो विभूत्या खलु भवसदृशः प्रायशश्चण्डदण्डः ।
ग्रीवग्राहं गृहीतो रणभुवि रभसाद् येन चानीय गेहं
तादृक् सम्मानितोऽभूत् विपदमपि तथा संपदं तां स मेने ॥ ८७ ॥

---

1. ङ, च—भुवना
2. ङ—सनि
   च—सुनि
3. दूरानुसारी

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

यः पारावारवारिप्रकरवलयितक्ष्मान्तसामन्तकोटी-
राजत् कोटीरकोटीं मणिगणकिरणैः प्रांशु मूर्द्धन्यवांशुः ।
डिल्लीशस्थापितस्याखिलयवनपतेर्भागधेयं निनीषन्
सेनानीः कश्चिदागाद्बहुतरतुरगो मल्लकीति[1] प्रसिद्धः ॥ ८८ ॥

तं मत्वा धूमकेतुं निजनृपतिकुलोत्तंसविध्वंसहेतुं
स्वान्ते तच्छान्तिचिन्तां दधदवनिपतिश्छद्मना पद्मनाभः ।
मैत्रीमत्राशु तन्वन् सपरिकरममुं वेशयन् दुर्गमार्गे
वन्यैरन्यैरगण्यैः सहपरशुकरैर्नन्दपुर्यां जघान ॥ ८६ ॥

लीला—[ श्रुत्वा ससंन्तोषम् ] नाथ ! कीदृशी मन्त्र[2]परिपाटी पद्मनाभदेवस्य । प्रिये ! किं बहुना, पद्मनाभदेवस्य विचारचातुरीमिव भाग्यवत्तासंपत्तिमपि निरूपमामवेहि । किं च,

सप्तर्षिप्रतिमप्रभावपटुभिर्यो दाक्षिणात्यद्विजै-
रावासीकृतमग्रहारमकरो[3]ल्लोकेशलोकोपमम् ।
एषां यत्र वधूजनैर्गुरुरणत् काञ्चीकलापस्वनैः
स्वाध्यायाध्ययनध्वनेः श्रुतिमतां वर्णोऽपि नाकर्णितः ॥ ९० ॥

स च—

दानं मानपुरःसरं द्विजकुले दीने दयाडम्बरं
प्रीतिं सत्सु तिरस्कृतिं खलकुले विद्वज्जने सत्कृतिम् ।
भक्तिं भक्तजने मुरारिचरणे भक्तिं दृढां दर्शयन्
कालं कालयतिस्म केवलमसौ श्रीपद्मनाभः प्रभुः ॥ ६१ ॥

इति श्रीराजगुरुपदवीप्रतिष्ठित[4]वासुदेवरथसोमयाजिकृतौ
गंगवंशानुचरिते चम्पूकाव्ये
अष्टमः परिच्छेदः ।

---

1. ङ—मल्लकीर्त्ति
2. क, घ—मत्र
3. क—निकरे
4. च—प्रतिष्ठापित

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# नवमः परिच्छेदः

लीला—नाथ ! पद्मनाभदेवानन्तरः कोऽसौ नृपतिर्निवेद्यताम् ।

विद्या—प्रिये ! निवेदयामि, अवधीयताम् ।

जज्ञे तस्यापि पीताम्बर इति तनयो दूरयन् दुर्विनीता-
नाजानाजानुवाहुद्वयगतपृथुताधूतशुण्डालशुण्डः ।
सत्सङ्गी भूरिभङ्गीमयमधुरमहारङ्गसङ्गीतशाली
दानी मानी दयालुर्वृषगतिः वृषभ[1]स्कन्धबन्धो[2]र्जितश्रीः ॥ १ ॥

किं च—

तस्यासीन्मल्लविद्यागुरुरखिलकलाकोविदः कोविदेन्द्रो
मिश्रः श्रीरामचन्द्रः द्विजकुलतरणिः कौत्सवंशावंतसः ।
नित्याचारप्रदीपं मुनिरिव विदधे धर्मशास्त्रप्रणीतं
तुर्यो यत्पूर्ववंशेष्वपि निगमगुरुर्वाजपेयी नृसिंहः ॥ २ ॥

स च नरेश्वरः —

धर्माचारपरिक्षतारिनिकरः सौजन्यरत्नाकरः
कान्त्याडम्बरकुत्सितासमशरः कारुण्यपूर्णान्तरः ।
सत्कीर्त्तिप्रकरक्षपाकरकरस्तोमावलिप्ताम्बरः
सर्वानन्दकरः कलासु चतुरः कोऽप्येषः पीताम्बरः ॥ ३ ॥

लीला—ततः ?

विद्या—प्रिये !

वैमात्रेयस्तदीयः सुजनकुलगुणग्रामविश्रामसीमा-
निर्व्याजभ्राजमानानुपमसुभगतासाधुसंचारभूमिः ।
लक्षं कंसारिनाम्नां सततमनुजपन् वासुदेवाभिधानो
राज्यं भ्रातुर्म हीयः[3] स्वमिव सुखमपात् यौवराज्येऽभिषिक्तः ॥ ४ ॥

---

1. क—ऋषभ  2. ङ—वक्षो  3. क—मदीयः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

यस्मिन् वीराधिवीरे क्षितिपतिपरिषच्चक्रचन्द्रायमाणे
शृङ्गोत्तुङ्गतुरङ्गं त्वरितमधिगते सङ्गरं गन्तुकामे ।
सद्यः स्वर्नागरीणां नवनवपुरुषालिङ्गने लम्पटाना-
मन्योन्यं दुर्निवारः समजनि कलहो वैरिवीरान् वरीतुम् ॥ ५ ॥

किं च—

सत्कान्तारसरागसक्तमनसोदारक्षमात्यागिनो-
दीर्णव्यायतवक्षसोपगतधीसन्मन्त्रिणो[1] पासमात् ।
शश्वद्भूषितभूतिशालिवपुषोपास्यैव सख्यं प्रभु-
र्येनानेन पलायिताद् युधि रिपोः प्रापि प्रभूतं यशः[2] ॥ ६ ॥

कीदृशं तदाह—

सुधाकृतसुधाकरं कुमुदवृन्दनिन्दापरं
बलारिकरिसुन्दरं विहितहंसहिंसादरम् ।
जितामरसरिज्जलं रजतशृङ्गिशृङ्गोज्ज्वलं
मनोहरति भूतले हरमनोहरं यद्यशः[3] ॥ ७ ॥

अपि च—

प्रायेणानल्प[4]दृष्टिः स्थिरतरजगतीतोषसंपादहेतुः
प्रोद्यत्साधुस्वराप्तिर्विपुलतरभुजा दम्भदम्भोलिशाली ।
मुष्णन्नेधाहिभीतिं खलबलदलनो तत्सुवर्णानुबन्धी
व्याचक्रे शक्रभावं न किमु सुमनसां प्रीतिसंपादनेन ॥ ८ ॥

किं च—

समीक्ष्य यद्वक्त्रविधुं मुदान्वितो
यदुक्तिमाधुर्यसुधानुरोधतः ।
श्रियं तथालोक्य[5] सहोदरप्रियो
जहौ न यं कल्पतरुर्भुजच्छलात् ॥ ६ ॥

---

1. च—मन्मन्त्रणो०
2. ङ—प्रहृष्ट क्षणः
3. क—भत्क्षणः
4. ङ—०नल्प
5. ङ—श्रिया च संगत्य

किं च—

मृधेऽद्ध चन्द्राशुगसंघसंभवाः
समुल्लसन्त्यो भुवि यस्य कीर्त्तयः।
भजन्ति[1] यत्कुन्दकदम्बडम्बरं
जयन्ति यत्कारणभागिनो[2] गुणाः॥ १०॥

किं च—

चक्रश्रीकलनपटू रसोदयाय
प्रोद्भूतावृषभगसम्भवैक[3] मूलम्।
सर्वत्राहित[4] बहुलानन[5] प्रसक्ति-
रीतिर्यस्य गिरिसुताकुचाविवा[6] स्ताम्॥ ११॥

अन्यच्च—

भयं दधाना इव बाणवर्षणात्
स्फुरत्प्रतापाग्निभयादिवाकुलाः।
पलाय्य तूर्णं रणरङ्गमध्यतो
दिगन्तरे यस्य चरन्ति कीर्त्तयः॥ १२॥

किं च—

द्विषामकीर्त्यां तमसावगुण्ठिते
रणाङ्गणे कज्जलमेचकांशुका।
मुदेव यत्खड्गलतातिसत्वरं
परस्य कण्ठग्रहणोद्यता ययौ॥ १३॥

[धनुर्ध्वनिं यस्य निशम्य सङ्गरे
नवाब्दशब्दानुविधानतत्परम्।
चिरं दधाना बहुमेचकच्छविं
ननर्त दुष्कीर्त्तिशिखण्डिनी द्विषाम्॥ १४॥][7]

1. ङ—वदन्ति
2. ङ—तत्कारणसंभवा
3. क, घ—सन्मदैक
ङ—संबदैक
4. ङ—विशकं कृत
5. ङ—बहुलानर
6. क, घ—कुचानिवास्तां
च—कुचादिवास्तां
7. ङ—Ms. only reads the sloka

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

राजन्यैकमणेर्महाद्भुतरणे यस्यैव बाहारणेः
कोदण्डेन[1] मथा[2] तथा विमथिताज्जातः[3] प्रतापानलः।
शम्भूर्वीक्ष्य जगद्विलुम्पनपटुं तं कालकूटच्छलात्
मन्ये संजगृहे निजान्तरवनीसंहारसंभारभृन ॥ १५ ॥

इत्थमेव—

दीनानाथैकवन्धुः खलदवदहनः सोऽतिकारुण्यसिन्धुः
प्रत्यर्थिप्रीतिदाता वितरणरणयोः साधुसंतोषकोपः।
नेत्रक्षेत्रामृतौघप्रसरणसरणिः साधुतानर्मशाला
भ्रातुर्व्यायामकेलीव्यसनपरतया पालयामास लोकम् ॥ १६ ॥

लीला—ततः ततः ?

विद्या—प्रिये !

[तस्मात् क्षीराम्बुराशेः किमिव सुरतरुः किं नु नीहारशैलात्
गङ्गाया वारिपूरः किमुदयशिखरात् पूर्णपीयूषभानुः।
एकान्तं दानशौण्डो दुरितचयभयं दूरयन् दृष्टिमात्रा—
न्नेत्रानन्दानुबन्धी किमजनि तनुजो मूर्त्तिमान् पुण्यपुञ्जः[4] ॥१७॥

किं च लीलावति ! वासुदेवाभिधानस्य तस्यैव ][5]अपरिमितभक्तिश्रद्धातिशयपूर्वकोपरचित[6]गुरुविप्रदेवतातिथिपूजाकर्मोपार्जितसुकृतसंदोहरूपान्तरमिव[7], केदारादितीर्थविशेषमधिगम्य जन्मान्तरकोटीरचितचन्द्रचूड़चरणारविन्दपरिचर्याविधेः परिणाम इव, कदाचित्[8]नानाविधबलिपूजादिसाधनशतपरितोषविशेषशालीमानसभवानीप्रसादस्य विवर्त्त इव[9], तुङ्गतरतरङ्गरिङ्गण-

1. क, ख—कोदण्डक
2. ङ—यथा
3. ङ—समथिता
4. च—पुण्यपुञ्जि
5. ङ Ms reads the bracketed portion after the prose passage.
6. च—पूर्वकोपचरित
7. ङ—गुरुदेवतातिथिसेवारूपस्नातकधर्मोपार्जित सुकृतसन्दोहस्य प्रादुर्भावः
8. ङ—Omits 'इव, कदाचित्'
9. ङ—Omits इव every where in the sentence.

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

भङ्गिशतभयङ्करगङ्गासागरसङ्गमहव्यवाहहुतनिजशरीरोपपादितधर्मातिरेकस्य प्रकारान्तरमिव [जगज्जनतानयनारविन्दसञ्चयसञ्चितागणितसुचरितकर्मकलापस्य परिपाक इव, अनिर्वचनीय-भावविशेषवशीकृतस्य भगवतो व्रजेन्द्रनन्दनस्य भक्तबन्धोः परमानुग्रहस्य फलमिव[1],][2]

स एष क्षितिभृत् कोटिनीराजितपदाम्बुजः ।
प्रशास्ति धरणीं दोर्भ्यां वीरः श्रीपुरुषोत्तमः ॥ १८ ॥

किं च—

उद्दामद्युतिपुञ्जमञ्जुलतया घर्मांशु धर्मोद्धुरे
यस्मिन् रिङ्गति सङ्गराङ्गणगते प्रत्यर्थिपृथ्वीभृताम् ।
यो दैन्येन जिजीविषामुपगतो यो वा युयुत्सां रुषा
तस्यासीत् कृतमस्य[3] नैव तरसा क्ष्मापृष्ठनिष्ठं शिरः ॥ १६ ॥

किं च—

अनेकमन्त्रैरपि शुद्ध[4]चेतसां
नरेन्द्रकाणामपि जीवनं क्षणात् ।
स्पृशन स्वधारारसनाद्वयेन च[5]
जहार यत् खड्गलताभुजंगमः ॥ २० ॥

किं च—

यद्दोर्दण्डद्रुमोद्यत्करकमलमहाकोटरैकानुषङ्गी
व्याकोषाकारकोषान्तरविलकुहरान्निःसरन्नुग्रवेगः ।
धाराद्वन्दापदेशप्रविततरसनाद्वन्द्वमान्दोल्य किंचित्
जातः किं वा रिपूणामसुपवनपिवः[6] खड्गवल्ली भुजङ्गः ॥ २१ ॥

किं च—

प्रयाणभङ्गाय तु[7] यस्य भूपतेः
स्थितिं दधत्यः शिखरीन्द्रमूर्द्धनि ।
अरातिवामाः प्रवहद्दृगम्बुभिः[8]
प्रवर्त्तयामासुरनेकशो नदीः ॥ २२ ॥

---

1. ङ— फलभूतः
2. क—Omits the bracketed portion
3. ङ, च—कृतमस्य
4. ङ—परिशुद्ध
5. ङ—नान्, च—सौ
6. ङ—० ज्जातः पाकारिपूतामसुपवनपिव
7. ङ—य तु
   च—मनु
8. ङ— निजलोचनाम्बुभिः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

ध्याते यस्मिन् समन्तात् खचितवहुतरस्वेदसंदोहभाजा-
मुद्यद्रोमाञ्चभूमाञ्चितनिजवपुषां यद्गुणाकर्ण्णनेन।
यं चोद्वीक्ष्यैव साक्षाद्विषमशररुजा भिन्नवक्षःस्थलानां
नारीणां यः प्रकम्पं निरनुभयमहो सन्ततं चिन्तनीति[1] ॥ २३ ॥

किं च—

यदीयकोदण्डविनिर्गताः शरा
दधुर्द्विरुक्तं फलवत्त्वमात्मनः।
शराशरीप्रक्रमदृष्टसौष्ठव-
क्षणक्षतानेकविपक्षभूमिपाः[2] ॥ २४ ॥[3]

अपि च—

पयं[4]दधाना वहुधान्यता[5]मियं
कथं नु वा मे[6] फलदायिनी भवेत्।
इतीव यश्चेतसि चिन्तयन् रणे
दधे कबन्धावलिसंकुलां भुवम् ॥ २५ ॥

सखि लीलावति ! अभूतमिदमाकर्ण्यताम्—

[[7]युद्धच्छिन्नारिमूर्द्धप्रकरवहुतमःशङ्कया दूयमाने
शीतांशौ तिग्मभामा सह गगनतले लीयमानेऽतिभीत्या।
मद्यस्तत्राभिषिक्तौ निज[8]भजजनितौ येन कीर्त्तिप्रतापौ
लोकेऽस्मिन्निर्विशेषं न किमु रचयतः पुण्यवन्नित्यकृत्यम् ॥ २६ ॥

लीला—[सविस्मयम्] नाथ ! कथमिति श्रोतुमिच्छामि।

---

1. क—सन्तनीति
   ङ, च—तन्तनीति
2. ङ—दूषितः
3. ङ—Reads this verse after the 26th sloka
4. ङ—क्षणं
5. ङ—भन्यता
6. ङ—कामे
7. ङ—गुरुच्छिन्नारि
8. च—० भिषिक्तानिव

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—श्रूयतां तत् ।

यत्कीर्त्तिः क्षीरनीराकरमथनवलत्पाण्डुडिण्डीरपिण्ड-
प्रख्याप्रख्यायमाणा व्यहरत कुमुदं नैकधोल्लासयन्ती ।
उद्यद्दोर्दण्डपूर्वक्षितिधरशिखरादुत्थितो यत्प्रताप-
श्चन्द्रानन्दप्रदायी व्यरचयदखिलं सारसंमोदशाली ॥ २७ ॥][1]

किं च—

शरावलीलुण्ठितगात्रयष्टयो
विनष्टपत्रावली[2]कुन्तलादयः ।
यदीयवैरिप्रकराश्च तत्स्त्रियो
भ्रमन्ति[3] मूढाः पितृकानने परम् ॥ २८ ॥

अपरं च—

न यः स्म धत्ते तृणमेकमानने
मृधे मुधा शंसितविद्विजयोत्सवः[4] ।
प्रविश्य यद्वाहुभयाद् वनान्तरे
कियन्ति वाऽसौ[5] चिनुते[6] तृणान्यपि ॥ २९ ॥

प्रिये ! परं कौतुकमाकर्ण्यताम्—

अत्युत्तुङ्गतरङ्ग[8]भङ्गिमवल[7]न्मातङ्गसंघोद्धुरं
यस्मिन् दिग्विजयाय याम्यककुभं[9] निर्याति वीर्योदयात्[10] ।
दूरात्तूर्यपटहोत्कटध्वनिधुरामाकर्ण्य कर्णोदरे
संभ्रान्ता भयभाजि कुण्डिनपुरे पौरा न के दुद्रुवुः ॥ ३० ॥

---

1. ङ—Reads the bracketed portion in a distorted way after the 22nd verse.
2. क—प्रभावल
3. ङ—वसन्ति
4. ख, घ—द्विडःभयोत्सवः
   ङ, च—दिग्जयोत्सवः
5. ङ—नाऽसौ
6. च—तनुते
7. ङ—अत्युत्तुंगतुरङ्गसंहतिमहा
8. च—०तुरङ्ग०
9. ङ—दक्षिणदिशं
10. क—वीर्योदयः, ख—वीर्योदयात्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

[किं च—

स्वायत्तीकृतपरभूभुजोऽन्तकमायान
पूर्णेन्दुप्रतीमहसो विशोकमायान ।
यो वीरो दयितरसः परास्तदोषो
दृष्ट्वा तुष्यति सचिवान[1] महीमहेन्द्रः ॥ ३१ ॥][2]

युद्धेऽनर्गलयद्भुजार्गलगलत्काण्डावलीखण्डितः
प्रत्यर्थिक्षितिपालवीरवरणव्यापारलीलाजुषाम् ।
हर्षादप्सरसां कुलैरथ मिथस्पर्द्धातिगर्द्धाकुलै—
र्हस्ताहस्तिमयः पुरन्दरपुरे प्रारम्भि कोलाहलः ॥ ३२ ॥

अपरं च—

दुर्वारप्रसरतमालसन् परागा[3]
दूरोद्यत्करगतमण्डलाग्रलक्ष्मीः ।
सर्वाङ्गैरनुगतभूरिभूतरक्षा
यत्सेना रिपुरिव वंभ्रमीति लोके ॥ ३३ ॥

प्रिये ! अन्यच्च कौतुकमवधार्यताम् ।

दिग्वासः पुरतः समित् पितृवने यत्कीर्त्तिरेषा नटी
नृत्यन्ती लभतेस्म केवलमितो वासांसि तास्ता दिशः[4] ।
तेनातुष्टमना नगारिनगरे नागेन्द्रपुर्यामथो
भ्राम्यन्ती न किमाससादवलयं रत्नाकरान्तं भुवम् ॥ ३४ ॥

अपरं च—

उत्तालप्रतिभवनाचितं समन्तात्
लीलायै घटित विटङ्कपालिजुष्टम्[5] ।
भूदारैरविरतशीलितं विभर्यो
व्यातेने[6] स्वपुरसमं पुरं परेषाम् ॥ ३५ ॥

---

1. क, घ—सचरवाम्
2. ङ—Reads the verse after 35th sloka.
3. ङ—दुर्वारप्रसरतमान् सप्तरागा
4. क—ताम्रादिशः
ङ—तास्ताश्शाः
5. च—शिष्टं
6. च—व्याचक्रे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

यं पारिजातमपि केचिदपारिजातं
निश्चिक्यिरे वितरणेन सदैव धीराः[1]।
यं मन्दरागमपि केचिदमन्दरागं
किं वारिराशिमथनेन समर्थयन्ति ॥ ३६ ॥

किं च—

सखि ! तच्चरित्रमतिचित्रमिव विभावितं प्रतीयते। तथा हि—

यो दोषाकरपदवीं न जातु धत्ते
कौटिल्यं न वहति नाश्नुते जडत्वम्।
नादत्ते क्वचिदपि चक्रदुःखलेशं
भूपृष्ठे जयति तथापि तारकेशः ॥ ३७ ॥

किं च—

यस्याक्रान्तिभयेन केरलपतिः[2] पल्लीशवल्लीयते
येनाक्रम्य हठेन नन्दनगरीनाथोऽप्यपार्थीकृतः[3]।
यद्भीत्या मगधेश्वरोऽपि मगधीभूतस्तनोति स्तवं
चक्रे गङ्गकलिङ्गवंशनृपतीन्[4] यः सङ्गरे भङ्गुरान् ॥ ३८ ॥

किं च—

योऽसौ भञ्जपुरं बभञ्ज[5] निहतो मञ्जुं निकुञ्जोदरे
येनाजौ खुरलीरसेन विरुलीराजो विदूरीकृतः।
पालूरप्रभुराप यस्य पुरतः शालूरलीलायितं
किं भूयो यवना रणेऽतिजवना येनावनम्रीकृताः ॥ ३९ ॥

---

1. क—रणेन धीरः
2. क—कोसलपतिः
3. क—अनाथीकृतः
   ख—अपार्थीकृतः
4. ड—संनेनेऽङ्गकलिङ्गवङ्गनृपतीन्
5. क—भभञ्ज

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अन्यच्च—

सत्काव्यः प्रबलतमः प्रचण्डधामा
सौम्यश्रीर्गुरुपदभागुदारकीर्त्तिः ।
यो जैवातृक[1] उदितः शनैश्चरः स्वं
भूकेतुर्वहति सदा नवग्रहत्वम् ॥ ४० ॥

प्रिये ! किमन्यद् भणामि !

को दातृप्रवरः क इन्दुरुचिरः कः क्षुण्णशत्रूत्करः
को वा धीरतरः क एव चतुरः कः सत्यवाग्डम्बरः ।
इत्येवं परिषद्गतेषु बहुधा प्रश्नेषु सिद्धान्तिनां
सर्वेषामयमुत्तरं विजयते योऽनङ्गभीमः प्रभुः ॥ ४१ ॥

लीला—( प्रतीच्यां दिशि वाद्यशब्दाननेकधा निशम्य ) नाथ ! किमिदं शब्दोऽतिबलं[2] समुज्जृम्भते[3] ?

तथा हि—

क्वचिड्डमरुडांकृतिः[4] क्वचन डिण्डिमाडम्बरः
क्वचित्सुषिरमाधुरी क्वचन झर्झरी झात्क्रिया ।
क्वचित् पटहपाटवं क्वचन दुन्दुभेर्दुर्दिनं[5]
किमन्यदवनीतलं सकलमद्य शब्दाकुलम् ॥ ४२ ॥

विद्या—( श्रुत्वा सहसोत्थाय उद्ग्रीवः सन् राजमार्गमवलोक्य ससंभ्रमम् ) प्रिये ! पुराकृतसुकृतातिरेकेण[6] पूर्ण एवायं भवत्या मनोरथः ।

लीला—कथमिव कथमिव ?

विद्या—प्रिये ! यदर्थं भवत्या ईदृशोऽयमुपक्रमः[7] स खलु सकलजनमनःसंवदनवदनो[8] निखिलक्षितिचक्रवर्त्तीपुरुषोत्तमदेवो भ्रमणीरसेनेत एवाभिवर्त्तते ।

---

1. क—जैवाकृतक
2. च—बेलं
3. ङ—विद्यार्णवउद्वेलः सहसा समुज्जृम्भते
4. च—भां कृतिः
5. ङ, च—दुर्दिनं
6. ङ—परिपाकेन
7. ङ—Omits प्रिये !…मुपक्रमः
8. ङ—यदेव, निखिलजनमनःसंवदनावलोकनः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—( सानन्दमुत्थायावलोक्य सानुतापम् ) नाथ ! प्रलयप्रारम्भसमयोद्वेलनिरर्गलोद्वलज्जलधिजलपूरानुकारिणि[1], अतितुङ्गमातङ्गपुङ्गवशतविरचितबहुतरबृंहिततापबृंहिते, प्रमदोत्कर्ष[2]हर्षमाणहयचयह्रेषाविशेषपरिपूरिते, आच्छादितनभोन्तरालनयनोपरोधिवैजयन्तीनिवहसमुल्लासिते[3], इह सैन्यार्णवे कथं नृपतिचन्द्रं अवलोक्य नयने कृतार्थयामि येन चिरन्तनी ममोत्कण्ठा सफला भवेत्[4]।

विद्या—( पुनरालोक्य स्मित्वा ) प्रिये ! किमुद्विजसे, कनकमयस्तम्भावष्टम्भित सुवर्णकलशोपशोभितवानायुजकम्बलमयपरिस्तोमपरीस्तृत[5]मुख[6]मण्डलोपगतमणिगणखचितसुवर्णरचितशृङ्गारशृङ्गारितोत्तुङ्गमातङ्गवरपृष्ठप्रतिष्ठित सुन्दरतराम्बर[8]मन्दिरमध्यमध्यासीनस्य चारुचामरव्यजनवीजनजनित वातजातकम्पभ्रंसितावतंसित[9]तमालाङ्कुरस्य महत्तेजोविशेषविद्योतविद्योतितपरिसरकनकवसनोपक्लृप्तमहोपधाननिवेशितवामप्रकोष्ठावष्टम्भितस्य[10] अद्य श्री पुरुषोत्तमदेवनृपतेर्वदनसुधाकरो नयनाञ्जलिना भवत्या पातुं सुशकः।

(इत्युक्त्वा प्रियामाश्वास्य पुनरन्यतोऽवलोक्य) प्रिये ! पश्य पश्य, नरपतिदर्शनहर्षोत्कर्षकरम्बितमानसानां परिह्रतपतिसुतगेहदेहकुलशीलादिसकललालसानां[11] वहिरेत्य समासादिताङ्गनानानगराङ्गनानां[12] गरीयान कीदृशोऽयं विभ्रमः।

तथा हि—

काचित् कङ्कणमाविपद्य चरणे[13] काचित् कपोलस्थले
कृत्वा कज्जलमुज्ज्वलं निदधती ताटंकमेकाङ्गुलौ ।
क्वाप्यन्या स्तनमण्डले निदधती सिन्दूरविन्दुद्रवं
धावन्त्येवमनेकशो मृगदृशो व्यत्यस्तभूषाम्बराः ॥ ४३ ॥

---

1. ङ—परदूरानुकारिणि
2. ङ—हे्षमाण
3. ङ—Omits आच्छादित ..समुल्लासिते
4. ङ—कुण्ठा भवति
5. ङ—परिस्थित
6. च—मख
7. ङ—Omits मुख ..शृङ्गारितो०
8. ख—सुन्दररोलम्बर
   ङ—only अम्बर, च—सुन्दराम्बर
9. ङ—कर्णपूर
10. ङ—Omits महजतेजो…ष्टम्भितस्य'
11. ङ—Omits परिहृत.. लालसानां
12. ङ—समासादिताङ्गानां पुराङ्गनानां
13. च—कङ्कणमाविषज्यरमेण
   ङ—कण्ठतटे निधाय वलयं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च— आसां मध्येऽपि,

एका सौधशिरस्युपेत्य नृपतिं स्वच्छन्दमालोकितुं
पाणिं पाणितले ददत्यनुचरी[1] भ्रान्त्या निजप्रेयसः।
दैवात्तन्मुखवीक्षणक्षणमिलल्लज्जाभयाज्जागरा
जानानेव पुरा ततोऽतिचतुरा तं दर्शयन्तीक्ष्यते ॥ ४४ ॥

लीला—( प्रियोक्तिमभिनन्द्य )[2] नाथ ! कौतुकं भणसि, यत् समुद्रवत् दुरवगाहेऽत्र पुरोत्तमे[3] यत्र येन क्रियते तत्सर्वं सर्वज्ञस्येव कथं महाभागस्य गोचरीभवतीति पृच्छामि।

विद्या—प्रिये ! अतिगुह्यं मम न जानासि ? यत् गुरुचरणाम्बुजोपासनादुपलब्धस्य विद्याविशेषस्य महिम्ना कोशाभ्यन्तरवर्त्तिनां प्राणिनां बाह्यकरणवृत्तय इव अन्तःकरणवृत्तयोऽपि विद्यार्णवस्य प्रत्यक्षीभवन्तीति।

लीला—( भर्त्तुर्विद्याधिगमं मन्त्रगोपनं च अवधार्य विस्मिता सती ) नाथ ! पश्य पश्य[4],

भर्त्तारं निजसविधे निभालयन्ती[5]
या द्रष्टुं क्षितितिलकं पुरो न सेहे।
सा सद्यः स्फटिकगृहं विलोक्य दूरात्[6]
चातुर्यादियमयते कृतार्थभावम्[7] ॥ ४५ ॥

विद्या—प्रिये ! अत्रान्तिके मिलिता नृपतिवदनारविन्दविलोकनेन स्मरशरदलिता गलितविवेका युवतयः[8] किमपि संलपन्ति।

---

1. क—ददत्यनुचरी
2. All the Mss. except ङ insert the following portion after ०मभिनन्द्य—

( सविस्मयं ) नाथ ! सार्वजनीनो जनवादः कदाचित् न वितथी भवति, सर्वैरुच्यते किल नार्यो हि जारमपि कारयित्वा पारयन्तीति तदद्य प्रत्यक्षीकृतमेव सौधगताङ्गनायाम्।

विद्या—प्रिये ! किमिति विस्मयसे, अतएवोक्तं सर्वज्ञतया मुनिभिर्बुद्धिस्तासां चतुर्गुणेति।

3. क, घ—पुरुषोत्तमे
4. ङ—Reads the line thus
लीलावती—विस्मयते
विद्यार्णवः—प्रिये
5. ङ—समीक्ष्यमाणा
6. ङ—पश्चात्
7. ङ—चातुर्यात् चिरमगमत् कृतार्थलाभम्
8. ङ—परमरभसाक्लिलतागलितविवेकायोषितः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—भवतु तर्हि जोषं शृणुवाव ( इत्युक्त्वा तथा कुरुतः ) । ततस्तासां काचन—

अस्माकं सदसि शनैः समुत्पतद्भ्यां
मध्याह्नस्फुटितसरोजसुन्दराभ्याम् ।
नेत्राभ्यां प्रसभमपाङ्गमागताभ्यां
किं नायं सखि कवलीकरोति चेतः ॥ ४६ ॥

अपरा च—

अस्माकं नयनचकोरशावकानां
केनास्मिन् हिमकिरणः कृतोऽयमेकः ।
अस्माकं सुकृततते:[1] पुराकृतायाः
किं नासौ जयति महीतले विपाकः ॥ ४७ ॥

अन्यापि—

आहूतो दयिततमेति वा ययासौ
किं तस्या न जगति मन्महे महत्त्वम् ।
एनं या क्षणमकरोत् सुतं निजाङ्के
किं तस्याः सुकृतचयं वयं वदामः ॥ ४८ ॥

इतरा च सपरिहासम्—

पश्यन्ती सखि वसुधासुधांशुमेनं
यद्वाताहतकदलीव कम्पमेषि ।
को दोषस्तव खलु तत्र मूलहेतुः
संचारः स्मरशरपक्ष्मारुतानाम् ॥ ४९ ॥

सखि लीलावति[2] !

इत्येवं किमपि परस्परं लपन्त्यो
गच्छन्त्यो[3] हतमदनस्य[4] पारवश्यम् ।
भूपालं पथि पथि वीक्ष्य मोदमाना
गौराङ्ग्यो न तु मनसां प्रभूवभूवुः[5] ॥ ५० ॥

---

1. ख—सुकृततत:
2. ङ—Omits 'सखि लीलावति'
3. घ—गच्छन्ते
4. ङ—स्मरशंवरस्य
5. ङ—गौराङ्ग्यो भुवि जनुषः फलं समीयुः

सीता—नाथ[1] ! नाश्चर्यहेतुरासां सचेतनानां पुरपुरन्ध्रीणां संभ्रमविभ्रमादिर्यदचेतनानामपि ।

एषा पुरी प्रियतमे वहिरभ्युपेते
तद्दर्शनोत्सुकतयाऽखिलमन्दिरेषु ।
उद्घाटितोत्कटकवाटगवाक्षलक्ष-
लक्ष्येण लोचनशतानि किमुन्मिमेष[2] ॥ ५१ ॥

※ [ अनन्तरं, निजनिस्वनपूरिताम्बरे वीरकाहालाडम्बरे [3]विगतविश्रान्तिभागिनि तदाकर्ण्नक्षणादेव निर्द्धारितनृपचन्द्रभ्रमणविजयावसरनिजसेवालोलमानसतया परितोऽनुधावनव्यग्रतयोद्वेल्लद्धम्मिल्लनीवीषु निखिलोपजीविषु जय जीवावधेहि विवर्द्धस्वेत्यादि क्षितिपतिकुलावतंसप्रभुवरपुरो [4]विज्ञापनार्हशुभाशीर्मयमधुरभाषाभाषणमुखरमुखाम्बुजेषु, किं च—

सकलजनासेचनकनवमदनाकृति[5]नृपवदनारविन्दं सततं[6] लुलोकिषालोलुपमानसतया राजमार्गोद्देशेन निखिलदिङ्मुखकुहरेभ्यो विनिःसृतानां गहनतमतया राजाधिष्ठितकरिवरलीलागमनोपरधिविमर्द्दनसंपादकानां पौरजनानामुत्सारणकर्मणि परिपतदाटोपदण्डयष्टिव्यापारचण्डतरेषु दण्डकरेषु, मन्दमन्दानुकूलपवनान्दोलनसुन्दरतर[7]चञ्चलाञ्चलतरङ्गितेन गगनाङ्गणसङ्गिवैमानिकजनव्यजनवीजनक्रियामायोजयन्तीषु वैजयन्तीषु, नारीनिवहनिहितनारिकेलफलसहित-

1. ङ—विद्यार्णव—प्रिये
2. क—किमुन्मिमीषे
ख—०विशेषः
3. क—दिगन्त
4. क—निवापनार्हं
5. क—० जनासेचनकनकनवदनाकृति
6. Mss. read ०विन्दसतत०
7. क—Omits तर

※ ङ—Ms. reads the bracketed portion as follows—

अनन्तरं सकलजनासेचनकनरपति नरपतिवदनारविन्दसततलुलोकिषालोलुपमानतया राजमार्गमुद्दिश्य निखिलदिङ्मुखकुहरेभ्यो विनिःसृतानामतिगहनतया राजाधिष्ठितकरिवरलीलागमनोपरोधिविमर्द्दनसंपादकानां पौरजनानामुत्सारणोच्चलदुद्दण्डकार्त्तस्वरदण्डमण्डितपाणिपङ्करुहेषु जयजीवावधेहिवर्थस्वेत्यादिनृपतिकुलावतंसप्रभुवरपुरो विज्ञापनार्हि— शुभाशीर्मयमधुमधुरभाषाभाषणमुखरमुखाम्बुजेषु, चलत, गच्छत, यात, मुञ्चत्यजतेति नृपतियात्रासमयोचितसकलजनमनः प्रोत्साहजनकविविधवादसंवादनवावदूकवदनाम्बुरुहेषु, युवजनप्रायेषु, वेत्रकरेषु पुरःसरेषु, तत्क्षणमेव ससंभ्रमदूरीकृतातपत्रशून्यशिरोभागनिवेशितकनकोष्णीषोपरि परिपतत्तपनातपसंपर्कोत्थितकिरणमञ्जरीच्छुरणपञ्जरीकृतगगनाङ्गणेषु, चिरतरचिन्त्यमानदुर्लभतमजन्मान्तरकृतसुकृता-
Contd.

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

चूतपल्लवोल्लासिमुखतोयभरभरितशातकुम्भशतनिधान विधान सत्वरेषु चत्वरेषु, तदानीं छत्रधारणो-
पजीविनि अविच्छेदानुधाविनि करीवरपथानुसारिणि गलन्तिकाधारिणि मणिमयपादपीठावल-
म्बिनि अविलम्बिनि तालव्यजनकरे सन्निहिततरे पार्श्वद्वयावगाहिषु चामरग्राहिषु, चरमपथचा-
रिणी विचित्रचर्मपादुकाभारिणी कृतान्योपकरणेषु कृतानुसरणेषु, तत्क्षणमेव दूरीकृतातपत्रशून्य-
शिरोदेशनिवेशितकनकोष्णीषोपरि परिपतन् तपनानतसंपर्कोदितकिरणमञ्जरीरङ्कुरणपिञ्जरीकृत-
गगनाङ्गणेषु, सुचिरचिन्त्यमानदुरापतरजन्मान्तरकृतसुकृतातिरेकसमुपस्थापितप्रभुवराकस्मिकदर्श-
नानुग्रहग्रहिलहृदयेषु सांयात्रिकैर्द्वीपान्तरोपाहृतानामदृष्टचरतया जगज्जनविस्मापकानां भारतवर्ष-
वासिभिः महजदूरवापानामनङ्गभीमदेवनरनायकपुरःप्रथमोपहारितानामनर्घ्यवस्तूनामुपरि सरसदृष्टि-
पात मात्र प्रमादमपेक्ष्यमाणेषु, मकलक्षितिपतिकुलमतिक्रम्य प्रथममहमवलोकयामीति राजराजा-
धिराजवदनावलोकनपरमपुरुषार्थसंपादनव्यग्रतया तोत्राङ्कुशताडनादियत्नशतपरिधावितकरितुरग-
मय [ यानकोटिपृष्ठप्रतिष्ठितेषु, प्रभुमुखकमलनिरीक्षणाद्भुतरसनिमग्नमनोनयनयो अगणितपुरो-
गतगजाश्वादि वस्तुषु सर्वतः समुपेतेषु, कलकुलोरुपञ्ज्याघातजनितझणझणकणकणरणरणनिनाद-
मयो परिसरोपगतजनतावधिर्य्यचयसंपादनचणशब्दशततिरोपित ][1] नैकविधडमरुडिण्डिम-
हुडुक्काढक्कादिवाद्यविशेषेषु, करकम्पित[2]करवालवल्लीरुचिररुचि चय[3]करम्बितदिनकरकर-
निकरसमुत्थिततेजःपुञ्जप्रतिहतलोकलोचननिवहेषु,मूर्द्धावनद्धशुद्धकालायसमयषोडशास्त्रो–

1. ख, घ & च—Mss.Omit the bracketed portion.
2. क—नरकम्पित
3. च—करवालवल्लरी चिररुचिचय

तिरेकसमुपस्थापित प्रभुवराकस्मिकदर्शनानुग्रहग्रहिलहृदयेषु, सांयात्रिकैः द्वीपान्तरोपाहृतामदृष्ट-
चरतया जगज्जनविस्मापकानां, भारतवर्षवासिभिः सहजदूरपानामनङ्गभीमदेवनृपतिपुरः
प्रथमोपहृतानामनर्घ्यवस्तूनामुपरि सरसदृष्टिपातमात्रप्रसादमपेक्षमाणेषु, सकलक्षितिपतिकुलमति-
क्रम्य प्रथममहमवलोकयामीति राजाधिराजनिरीक्षमाण प्रथमपुरार्थसम्पादनव्यग्रतया तोत्राङ्कुश-
ताड़नादियत्नशतपरिधावितकरितुरगमययानकोटिपृष्ठदेशप्रतिष्ठितेषु, प्रभुमुखनलिनावलोकन-
तत्परनयनयुगतया अगणितपुरोगतगजाश्वादिवस्तुसहस्रशोणितच्छटारङ्कुरणशङ्काविषयकृपाणमण्डल-
मण्डनमण्डितकरतलेषु खड्गकुलेषु, करकलितकरवालवल्लीरुचिररुचिचयकम्पितदिनकरनिकरसमु-
त्थिततेजःपुञ्जःप्रतिहतलोकलोचननिवहेषु खड्गकुलेषु संकुलेषु, प्रणामावसरकरकरम्बितकुन्तलता-
कण्ठोपकण्ठनिवेशितकनकरजताराकूटलोहमयवलयमयचलनोज्जिहानकिणिकिणिरवाकर्षणपरवशस्व-
मुखसम्मुखीकृतविषयान्तरपरिशीलनानवहितनृपचन्द्रनयनारविन्दद्वन्द्वविलोकनप्रमदभरप्रफुल्लवदना-
म्बुजेषु, शुद्धसुवर्णसूत्रपरिवेष्टनप्रकल्पिततरलाकारसुवर्णगुटिकाप्रतिमल्लिग्रन्थिविशेषमनोहरवीर–

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

ज्ज्वलदहितप्रहितशरगुलिकादिपातसमयजनितभ्रमणपरिपाटीवश्चिततोदाघात[1] भयपुरोवलम्बिना-सावंशदंशायमानधुस्तुरकुसुमानुकारिस्वावयवविशेषसुन्दरशिरस्त्राणगणसम्भृतशिर:प्रदेशेषु, वानायुजोरणरोमजकम्बलकृतवालारुणारुणकान्तिपूरपूरितनानावर्णस्वर्ण्णसूत्रसूत्रितसुषमकुसुमपुञ्जमञ्जुलदक्षप्रकोष्ठपृष्ठप्रतिष्ठितहस्तावापकिरणगणप्रतिबिम्बसम्वलनवितायमानपूर्वार्द्ध भागलग्नशात्रुशोणितच्छटास्फुरणशङ्काविषयीकृतकृपाणमण्डलमण्डितकरतलेषु खड्गिकुलेषु संकुलेषु, प्रणामावमरकरकमलावधृत[2] कुन्तलताकण्ठोपकण्ठनिवेशितकनकरजताग्कूटलोहमयबलयचलनोज्जिहानकिणिकिणिरवाकर्षणपरवशश्रवमुखसम्मुखीकृतविषयान्तरपरिशीलनानवहितनृपतिचन्द्रनयनारविन्दद्वन्द्वविलोकनप्रमदभरभरणप्रफुल्लवदनाम्बुजेषु,शुद्धसुवर्ण्णसूत्रपरिवेष्टनप्रकल्पिततरलाकारसुवर्ण्णगुटिकाप्रतिमल्लग्रन्थिविशेषमनोरमवीरवल्ली[3] पदसंकेतितकर्ण्णाभरणगुञ्जादोलनसुन्दरकपोलस्कन्धसन्धिषु, धौततरकलधौतसूत्रघटितकटिसूत्राभरणसंघट्टितकटितटनिवद्धपरिकरोदर[4] निवेशितदन्तमयमुष्टिजुष्टच्छुरिकाबन्धबन्धुरमध्यभागेषु, कण्ठावलग्नकनकशृङ्खलावलम्बिललिततरतिरश्चीननिर्मितकोण[5]-चतुष्टयपरिगतपरिसरपरिसृतविन्दुसन्दोहसुन्दरकान्तस्वरकृतनिष्कविराजदुरस्केषु[6], सूक्ष्मतमचेल-

1. घ, च—तदाघात
2. घ, च—०वर्धित
3. ख—वारवल्ली
   च—वीरावली
4. ख, च—परिकरादर
5. च—कोष
6. क—चिराजदुष्करेषु

---

वल्लिपनसंकेतितकर्णाभरणपुञ्जान्दोलनसुन्दरस्कन्धकपोलसन्धिषु, धौततरकलधौतसूत्रघटितकटिसूत्रेषु-सर्वत: समुपेतेषु नृपतिशतेषु फलककुल्योरुपर्वाघातजनितझनझनकणकणरणरणनिनादमयपरिसरोपगतजनताकर्णयुगलबाधिर्यचर्यासम्पादनचणशब्दशतंतिरोधायितबहुविधडमरीडिण्डिमहुडुक्कादि-शब्दान्तरेषु, करकलितकरवालवल्लीरुचिररुचि चयकम्पितदिनकरनिकरसमुत्थिततेज:पुञ्जप्रतिहतलोकलोचननिवहेषु, मूर्द्धावनद्धशुद्धकाषायसमयषोडशास्त्रोज्वलदहितशरगुलिकानिपातसमयजनितभ्रमणपरिपाटीवश्चितदोर्घातभयपुरोऽवलम्बिनासावंशदंशायमानधुस्तूरकुसुमानुकारिस्वावयवविशेषसुन्दरशिरस्त्राणगणसंवृत्तशिर:प्रदेशेषु वानायुजोरणरोमजकम्बलसंवलिते नानावर्णस्वर्णसूत्रसूचितसुषमकुसुमपुञ्जमञ्जुलदक्षप्रकोष्ठपृष्ठप्रतिष्ठितहस्तावापशोणतरकान्तकान्तिपूरप्रतिबिम्बसमूलानिर्जितायमानपूर्वार्द्ध भागलग्नशस्त्राभरणमणिसंघसंघट्टितकटितटनिवद्धपरिकरनिकरोदरनिवेशितदन्तमयमुष्टिजुष्टच्छुरिकावद्धबन्धुरमध्यभागेषु, कण्ठावलम्बिकनकशृङ्खलावनद्धललिततमतिरश्चीनविनिर्मितकोणचतुष्टयपरिगतपरिसरगतविन्दुसन्दोहसुन्दरकान्तस्वरकृतनिष्कविराजदुरस्केषु,

Contd.

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

खण्डमयतीर्यकवेष्टनोपजुष्टशिरोवेष्टनीभूतवसनाञ्चलयुगलमण्डितमन्यापदेशमनोहरेषु कुन्तकरेषु[1] पार्श्वचरेषु, अतिसान्द्रचन्द्रचन्द्रिकानिन्दककान्तिछटाच्छुरितासिचयनिचयाहित[2]कञ्चु-काञ्चितशरीरतया नरनायकभुजार्जितगुणानुरागसततानुगतमूर्त्तिमद्यशोराशिघटितप्रतिमा[3]-प्रतिमेषु, तरुणारुणारुणदेशविशेषोरणतनुतरतनूरुहराजिकृतकम्बलसम्बलनविहितकोषपिहितगुलिका-नलिकायन्त्रयन्त्रितस्कन्धबन्धबन्धुरेषु, अदृष्टचरसूक्ष्मतरनानादेशीयविचित्रचित्रचित्रितविविध-रुचिरुचिरोष्णीषचयोपशोभितशिरस्केषु तुरुष्केषु,

किं च—

मुखलीनकनक[खलीनधारणयन्त्रणोत्पतयालुलतया][4]खलीनभावमुपगतेष्विव दर्शितगति-रङ्गेषु तुरङ्गेषु दानजल[5]परिमलाकृष्टहृष्टतरमञ्जुगुञ्जनमधुकर[6]गुञ्जारवकरम्बितमुखरित-घण्टापथघण्टानादोत्कृष्टासु[7]सुकरिघट्टासु[8], परस्परनिरीक्षणक्षणकलहायमानवैतंसिककौलेयककुल-कलकण्ठोपकण्ठनिहितविहितखणखणाराव[9]विशृङ्खलादामकर्षणायासितकरेषु, सैनिक[10]-निकरेषु, पवनान्दोलनदोलायितसितपीतनीलारुणचेलकुलकल्पितपताकाशतभूतलवीनच्छायापहृत-

1. क— Ms. Omits कुन्तकरेषु
2. च—निचयादित
3. घ, च—Omit 'प्रतिमा'
4. ख,घ,च—Omit the bracketed portion
5. क—मदजल
6. ख—मधुकरपुञ्जीरव
7. क—नादोत्कटासु, च—नाथोत्कृष्टासु
8. घ—घण्टासु
9. घ—विशृङ्खशृङ्खला
10. घ—शैनिक

सूक्ष्मतरचेलखण्डमयतिर्यग्वेष्टनोपजुष्टशिरोवेष्टनीभूतवसनाञ्चलगलमण्डितमन्यप्रदेशमण्डितमनो-हरेषु कुन्तकरेषु पार्श्वचरेषु, अतिसान्द्रचन्द्रचन्द्रिकावृन्दकरुचिरुचिरसिचयनिचयकृतकञ्चुकाञ्चित-शरीरतया नरनायकभुजार्जितसतताऽनुगतमूर्त्तिमद्यशोवितानप्रतिमाप्रतिमेषु, तरुणारुणारुणित-देशविशेषमेषरोमकृतकम्बलसंवलनजिहितकोषपिहितगुलिकानलिकायन्त्रयन्त्रितस्कन्धबन्धबन्धुरेषु, अदृष्टतरनानादेशीयश्लक्ष्णतरविचित्रचित्रमयोष्णीषचयोपशोभिशिरस्केषु तुरुष्केषु कलितपुरष्केषु, पवनान्दोलदोलायितसितपीतनीलारुणचेलकुलकल्पितपताकाशतकृतछायापहृतदिनकरकरेषु चत्वरेषु, चतुर्विधवाद्येषु वाद्यमानेषु खललोकलोललोचनारविन्दमन्दीकरणसुन्दरसुधाकरमण्डलः, रिपुबलदन्तावलकूलकूलंकषमदोन्मत्तकण्ठीरवः, नवनवसुधावदातसुन्दरतरसितोष्णीषोपरि विनि-हितपट्टरुचिनानामणिखचितमुकुटतरनिःसरत्किरणजालरचितचन्द्रातपचारुतरकृत्रिमाम्बरमन्दिर-मध्यमध्यासीनः, मन्दादोलनमञ्जुलवर्णावलम्बिकर्णवेष्टनयुगगतमुक्ताफलप्रतिफलनहिण्डमान-लावण्यपूरपरिपूरितगण्डमण्डलः, कनकवलयवलयितकरिवरकराकारभुजदण्डमण्डनरत्नकङ्कण-

Contd.

दिवसकरकरेषु नगरोदरेषु, निजनिःस्वनाटोपेन क्षुभित[1]सागरगम्भुषु कम्बुषु, नागरनगरस्त्रागमान-मधुकरिकासु[2], मधुरिकासु दिगन्तविश्राणित[3]कोलाहलासु काहलासु[4], प्रतिरवपूरपूरित-नगोदरीषु भेरीषु[5], अनवरतविभाव्यमानधुमुधुमुरवारम्भसम्बन्धदिक्कासु ढक्कासु, विमतभटकर्णतटविस्तीर्णकाटवे पटहपाटवे, इत्थमेव मङ्गलार्थेषु वाद्येषु वाद्यमानेषु, सकललोकलोललोचनारविन्दवृन्दमन्दीकरणसुन्दरसुधाकरमण्डलः, रिपुबलदन्तावलकुलकुम्भ-कपमदोन्मत्तकण्ठीरवः नवनवसुधावदातदुकूलतरङ्गितो[6]ष्णीषोपरिपरिहित[7]पटुरचितनानामणि-गणखचितमुकुटतटनिःसरत्किरणजाल[8]रचितचारुचन्द्रातपचञ्चुरकृत्रिमाडम्बरमन्दिरमध्यमध्या-सीनः, मन्दमन्दान्दोलनमञ्जुलकर्णावलम्बिकर्णवेष्टनयुगगतमुक्ताफलप्रतिफलनद्विगुणितार-लावण्यपूरपूरितगण्डमण्डलः, करीवरकराकारभुजदण्डमण्डनकनकवलयनिवेशितमणिप्रवेक-निःसरत्किरणाङ्कुरोर्मिकिर्मीरितसित[9]कञ्चुकतया विचित्रचित्राच्छादित इवोपलक्ष्यमाणः, किं च—

वनभूमय इव प्रसृमरचमूरवः, मुनय इव कलिततीर्थपदगमनाः, पद्मकोषा इव सदाहितवन्धना-लयः,[10] बाणासुरसमरसीमान इव अरिच्छिन्नवाहवः माधव इव हृष्टदीनकृपालवः, भोगवति-प्रदेशा इव समुदञ्चितमहाहयः, शुचिसमयमध्याह्नपथिका इव लुलिततमाः[11] वक्षःस्थलस्थित-निष्कमध्यतरलीकृत[महामाणिक्यमणिकिरणच्छटाच्छुरणवलात् प्रवालमालीकृत][12] शुद्धतर-तारहारोज्ज्वलः श्रीपुरुषोत्तमदेवनृपतिः लीलावतीनयनयुगस्य युगान्तरोपार्जितोर्जितसुकृतकृतादेश इव तत्क्षणसाकाङ्क्षानिरीक्षणक्षणपरमादरवरलोचनप्रहितरश्मिचयाकृष्ट इव श्रीगुण्डिचामण्डप-स्थाश्रमादतिमन्थरं चलति स्म । ]

---

1. च—क्षुधित
2. ग, च—माधुरिकासु
3. क—विश्रान्त
4. च—काहलीसु
5. क—Reads नगोदरीषु & Omits भेरीषु
6. क, घ, च—तरङ्गितो o
7. घ, च—परितः
8. क—Omits जाल
9. ग—सित o
10. क—वन्दितालयः
11. च—उल्लसिततमाः
12. क—Omits the bracketed portion

---

गतरत्नशनबहिरुद्गतकिरणाङ्कुरकृतकिर्मीरभावोपगतदेशान्तरीयचित्रवसनरचनाविशेषरचित ........ ज्जनकसितकंचुकाचितसकलशरीरः, वक्षःस्थलस्थितकनकदामलम्बमाननिष्कमयतरलीकृतशोणमणि-किरणच्छटाच्छुरणकलापवालमालीकृतशुद्धरत्नतारणहारोज्ज्वलः श्रीपुरुषोत्तमदेवनृपतिः लीलावती-नयनयुगयुगान्तरोपार्जितसुकृतकृतादेश इव, तत्क्षणसाकाङ्क्षनिरीक्षणपरमादरजनलोचनप्रहित-रश्मिचयाकृष्ट इव गुण्डिचामण्डपस्थाश्रयस्मादतिमन्थरं चलति स्म ।

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—( सानन्दभरम् ) प्रिये लीलावति !

आरूढ़ो वाञ्जनाद्रिप्रतिममनुगतं[1] मत्तमात्तङ्गमेकं
स्मेरास्यो नागवल्लीदलदलनकलाफुल्लगल्लस्थलीकः ।
धावन्तं स्वाननेक्षासरभसमभितो लोकमालोकमानः
कान्तेऽभ्यर्ण्णे प्रपन्नः सफलय नयने सैष राजाधिराजः ॥ ५२ ॥

सा च—

तदनु स्तम्भापरिवारिता चिराभिमतं नरपतिमतिसमीपे स्वच्छन्दमवलोकयन्ती—

मिष्टान्नं[2] क्षुधितो यथाऽमृतरसं किं वा पिपासाकुलो
जात्यन्धो नयनद्वयीं किमथवा चिन्तामणिं दुर्विधः ।
प्रातर्पङ्कजिनी[3] दिनाधिपमथो पाथोधरं चातकी
तद्वन् तत्र दधौ प्रमोदजलधौ लीलावतीमज्जनम्[4] ॥ ५३ ॥

लीला—( सानन्दम् ) महाभाग ! पश्य पश्य, एष हि—

अभिनवमदनाभिराममूर्त्तिः
स्मित[5]लवचन्द्रिकयाञ्चितानतनेन्दुः ।
जनयति चललोचनाञ्चलेन[6]
प्रिय वहुधा वसुधासुधाभिषेकम् ॥ ५४ ॥

( पुनः सजिज्ञासम् ) नाथ ! नृपतिकुलावतंससमीपतो वाजिराजाधिष्ठितः किमपि विज्ञापयति क एषः ?

विद्या—प्रिये ! एष किल राज्ञा चतुरङ्गसैन्याधिकृतो निखिलमणीनां बहुमतो[7] यथार्थनामा हरिसेवकमणिः ।

---

1. ङ—अभिमतं
2. च—मृष्टान्नं
3. ख, घ, च—किं प्रातः नलिनी
4. ङ—Reads the last two lines as—
किं चक्री निशिविप्रयोगविधुरा प्रातः प्रियं प्रोषितं
संदत्सुत तथा प्रमोदजलधौ मग्नैव लीलावती ।
5. क—स्फित
ङ—सित
6. ख—बललोचनाञ्चलेन
7. ङ—Reads राजवीजितया बहु बहुमानशाली for राज्ञा...मतो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

लीला—नाथ ! तुरगवरपृष्ठप्रतिष्ठिता नृपतिचन्द्रपुरवर्त्तिनो राजजीविनः[1] सर्वे किमिति भणय इत्युच्यन्ते।

विद्या—किमसांप्रतं, युज्यते हि—

यान् कण्ठे कलयन्ति पङ्कजदृशो ये सज्जनोरःस्थले
लग्ना हारवदादृताः नृपतयो मूर्द्धा वहन्त्येव यान्।
ये भङ्गं न भजन्ति[2] जातु[3] कुहचित् दूरीकृतं यैस्तमो
ये मुञ्चन्ति न कृष्णवर्त्मनि रुचिं किं ते मणिभ्यः पृथक् ॥ ५५ ॥

लीला—( पुनः सप्रार्थनम् ) नाथ ! विचित्राच्छादनाच्छादिततुङ्गतरशलाकावलम्बिचित्रकम्बलपरिस्तृत-कनकवसनोपक्लृप्तमहोपधानद्वयी[4]खचितशिविकामध्यासीनः क एषः ?

विद्या—प्रिये ! एष खलु राज्ञा निखिलराज्यभारव्यवहारयोग्योऽयमिति ज्ञात्वा व्यवहर्तृमहापात्र-पदवीमासादितो विविधविचारचातुरीचञ्चुरमतिर्दयानिधिमिश्रनामा विप्रवरः।

लीला—नाथ ! पृच्छामि, एते किमु राज्ञो महापात्रत्वात्[5] महापात्रपदेन व्यपदिश्यन्ते, किं वा पारम्पर्य्येणेति।

विद्या—प्रिये ! अत्र विषये केषां वा कीदृशी चर्च्चा स्फुरतु, मम मते तु-

औदार्योर्जितधैर्यवीर्यगुरुताचातुर्यशौर्य्यार्य्यता-
मर्य्यादाप्रभृतीन् गुणांस्तत इतो व्यस्तान् समस्तानपि।
एकत्रे क्षितुमक्षमः क्षितितले धातापि जातादर-
स्तानत्रैव निधाय पश्यति महापात्रे महाकौतुकी ॥ ५६ ॥

लीला—सम्यङ्मीमांसित[6]मार्य्यपुत्रेण, अन्यथा कथमल्पपात्रे एतावन्तो गुणाः सम्मातुमर्हन्ति ।

विद्या—नोचेत् किम् !

लीला—(विहस्य) नाथ ! भवतां वन्दिजातेः सहज एवायं धर्मः येन किल स्तोतव्यं वस्तु नाना भङ्ग्या स्तुवन्ति। ( इत्युक्त्वा पुनरन्यतोऽवलोक्य )

---

1. क—राजवाजिनः
   ङ—राजवीजिनः
2. च—वहन्ति
3. ङ—वातु
4. च—तया
5. ङ—महामात्रत्वात्
6. क—सम्यक् समर्थित
   च—सम्यग्विचारित

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

महाभाग ! इतश्च, वल्गुवल्गाकर्षणचणो नियंत्नमेव[1] हयरत्नं[2] नर्त्तयति क एषः ?

विद्या—प्रिये ! न जानासि,

मन्त्रित्वात पुरुषोत्तमस्य जगतीनाथस्य देहश्रिया
स्त्रीणामुत्सवभावतो नृपकुले भर्त्तुस्तथोत्कर्षतः ।
आर्याः साधु विचार्य चेतसि चिरं यं प्राहुरेवोद्भवं
सिंहं सिंहकुलोदयाच्च समरे सोऽयं न कीदृग्विधः ॥ ५७ ॥

लीला—नाथ ! नरेन्द्रचन्द्रसन्निहित एव किमपि किमपि भाषमाणो गजराजकरकरम्बितहयःप्रतिष्ठितः क एषः[3] ?

विद्या—प्रिये ! एष खलु , प्रबलतरदन्तावलकुलसंकुलस्यापि रिपुकुलविक्षोभ[4]दक्षिणः क्षितिपतिप्रसाद-भाजनं पुरुषोत्तममहापात्र नामा वीराग्रणीः ।

सोऽयं वाजिनमाजिरङ्गधरणावारुह्य सह्यं प्रभोः
कर्त्तुं वाञ्छति चेत् तदास्यपुरतो दृष्ट्वा रिपूनुद्यतान् ।
भानुर्भीतिमुपैति मोदमयते गोमायुगृध्रावली
नन्दन्त्यप्सरसो रसात् सुरपतिः संपाद्यपाद्यादृतः ॥ ५८ ॥

लीला—नाथ ! हयादवतीर्य अतिविनयेन राजाधिराजं प्रणम्य तदवलोकनप्रसादं वहुमन्यमानः कृतार्थ इव पुनर्वाजिनमारुरुक्षति क एषः ?

विद्या—प्रिये ! एष खलु स्वारोपितदुर्नयविटपिनः परिपक्वफलं भुञ्जानः कामरूपनगराधीश्वरः[5] ।

लीला—नाथ ! कीदृगस्य दुर्नय इति जिज्ञासुरस्मि ।

विद्या—प्रिये ! पुराह्येष राज्यमदमोहिततया खद्योतः खमणिनेव पुरुषोत्तमदेवेन साम्याभिनिवेशवशात्[6] गर्वायमाण[7]मानसस्तदीयानामपकृतिकृतौ कृतव्यापारो देवाधिदेवः भ्रूसज्ञामात्रेण[8] संप्रति परिपन्थिनासौ वीराधीश्वरेण राज्यादुपद्रुतो वीराधिवीरवरचरणौ शरणयति ।

---

1. ख—नोचितमेव
   घ—नुत्नमेव
   च—नूनमेव
2. ख—हृदयरत्नं
3. ङ—नरनायकसमीप एव तुरगवराधिरूढः किमपि रासमाणो निजवाहवशंवदत्वप्रदर्शनाय करिवरकरकरम्बितहयः प्रतिष्ठते, क एषः ।
4. ख—रिपुवलस्यात् भिक्षोभ
   घ, च—रिपुबलस्ताभिक्षोभ
5. ङ—पारसिकाधिपतिः
6. ङ—खमणेः खद्योत इव पुरुषोत्तमदेवादात्मानं निर्विशेषं मन्यमानः
7. क—वैरायमाण
8. ङ—तदीयानामपकृतिकृतौ व्याप्रियमाणो राज्यं पालय

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

[लीला—असौ तर्हि स्वहस्तोपार्जितामवस्थामास्थाय विचरति।][1]

विद्या—प्रिये ! अत्रान्तरे समयोचितवस्तुप्रस्तावनपटुर्वैतालिकवटुरन्यापदेशेन यदुपश्लोकयति तदवधार्यताम्।

लीला—(अवहिता शृणोति।)

वैतालिकः—(व्यावृत्य दक्षिणवाहुमुद्यम्य उच्चैः कारम्)—

यस्त्वां दन्तावघातैस्तुदति[2] तव तरून्मूलने व्यापृतो यो
माद्यतौन्नत्यगर्वाद्गिरिवरभविता[3] स्पर्द्धते योऽतिमूढः।
सोऽद्य क्षुत्क्षुब्धपञ्चाननकटुविकटध्वानमाकर्ण्यकर्णौ
श्रान्तो[4] दन्ती तवान्तः[5] प्रविशति निभृतं जीवने सन्दिहानः[6] ॥ ५६ ॥

विद्या—प्रिये ! पश्य पश्य, नरनायकोऽपि समयोऽपन्यस्तं निरवद्यं पद्यमाकलय्य प्रमोदकलितान्तःकरणः सकलभाण्डोपेतमश्वप्रकाण्डं स्वारोहणाय पुरो निःसृतमपि नयनाञ्चलोदञ्चनेन[7] वैतालिकसूनवे पारितोषिकं वितीर्य्य सलज्जमिव स्मयते।

लीला—(श्रुत्वा ससन्तोषम्) साधु रे वैतालिकपोत साधु साधु, इत्थं कालज्ञस्य ते कुटुम्बभरणं कियदित्यवधारयामि।[8] (इत्युक्त्वा) नाथ ! क्षितिपतिकुलमौलिमण्डनस्य प्रभोः पुरस्तान् भूयो भूयो वाजिनमावर्त्तयति क एषः ?

विद्या—प्रिये ! अयं तु जात्या ब्राह्मणोऽपि परशुराम इव अतीव क्षात्रधर्मपरिनिष्ठितः[9]—

युद्धश्रद्धां प्रवृद्धां दधदधिकतया धैर्य्यशौटीर्य्यशाली[10]
यो नानाकारभङ्ग्या विचरति समरे वाजिपृष्ठैकनिष्ठः।
यं सर्वारातिगर्वोद्धतकृतमरयः प्रेक्षितुं न क्षमन्ते
सोऽसौ नारायणाख्यः क्षितिपतिपुरतो याति सामन्तरायः ॥ ६० ॥

लीला—नाथ ! भर्त्तुः सव्यपार्श्वस्थः शिविकारूढः प्रतिष्ठते क एषः ?

---

1. ङ—Omits this line
2. ङ—स्तुवति
3. Mss. read भवता
4. ख, च—भीतो
5. ङ—शान्तोदन्तीव दान्तः
6. च—संविदानः
7. क—नयश्चालोदञ्चेन
ख—नयनाञ्चलोदञ्चनेक
8. ङ—समयोचितं सम्यक् प्रस्तुतम्
9. क, ख—Omit अतीव o
ङ—Omits 'अतीवक्षात्रधर्मपरिनिष्ठितः'
10. च—शौण्डीर्यशाली

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

विद्या—प्रिये ! यः खलु परमकल्याणगुणपरमपुरुषभक्तिप्रवाहवाहिविशुद्धान्तःकरणः करणकुलनिर्मलीकरणपटुः प्रभोः पुरुषोत्तमदेवस्यापि—

संदिग्धे कृत्यवर्त्मन्युपदिशति हितं धर्ममर्मैकवेत्ता[1]
भेत्ता दुःसंशयानां नृपनयसरणे तत्त्ववित् भूरिसत्वः[2] ।
साधुर्व्याधूतदोषः सकलसुजनतासाधुवादैकपात्रं
भूभर्त्तुर्वामभागे प्रचलति शनकैः सैष गौराङ्गदासः ॥ ६१ ॥

लीला—नाथ ! कण्ठोपकण्ठनिहितकिङ्किणिजालमालाकिणिकिणिरववैभवमुखरितदिङ्मुखं टङ्गण[3]देशीयमश्ववरमधिष्ठितः प्रभोरभ्यर्णचारि चरति क एषः ?

विद्या—प्रिये ! एनमपि न जानासि ? यः खलु—

इन्द्रस्यैव गिरांपती रघुपतेर्मन्त्री सुमन्त्रो यथा
दैत्यानामिव भार्गवो यदुपतेरासीत् यथैवोद्धवः ।
तादृग्भर्त्तुरशेषकर्मसु हितादेशी विचारे पटु-
र्दासः सैष विनायको विहरते राजाधिराजान्तिके ॥ ६२ ॥

इत्थं तयोरालपतो राजा गङ्गकुलोद्वहः[4] ।
ससैन्यः सपरीवारो द्वारदेशमुपासदत् ॥ ६३ ॥

इति श्रीराजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजीकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
नवमः परिच्छेदः ।

---

1. ङ—दानशालीदयालुः
2. ङ—दम्भारम्भैकशुम्भत्तरपिशुनघटागर्वसर्वापहारी
3. ङ—टङ्किता
च—टङ्कण
4. ङ, च—०कुलोद्भवः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# दशमः परिच्छेदः

अथ नरपतिरित्थं वन्दिभिर्वन्द्यमानो
विजयनगरपूर्व्या द्वारमासाद्य सद्यः ।
सपदि समुदितानामासनादुत्थितानां
प्रणतिशतमगृह्णात् तत्र दौवारिकाणाम् ॥ १ ॥

किं च—

तदनु स मृगयायां कौतुकाविष्टचेता
धृततदुचितवेशो दन्तिपृष्ठावरूढः[1] ।
अविशदविशदाभैर्लुब्धकैर्लब्धवर्त्मा
हरिणचरणचिह्नैः पावनान्ते वनान्ते ॥ २ ॥

तस्मिन्नरेन्द्रतिलके विपिनान्तराल-
माखेटकार्थमुपयाति लतासु तासु ।
तुङ्गोत्तरङ्गनभःसङ्गमनाददभ्रात्
भूयोनुकूल[2]निनदः किमु नाविरासीत् ॥ ३ ॥

ततः परम्—

कोदण्डानि क्रियन्तां त्वरितमधिगतज्यानि सर्वैरमेया
मुच्यन्तां सारमेया[3] गजगवयपथे स्थीयतां जागरूकैः ।
वीक्ष्यन्तां दिग्विभागास्तरुशिखरगतैः काल्यतां काननान्तं-
स्तत्रैके राजराजाभिमतिमिति मुहुर्व्याधवत् व्याहरन्ति ॥ ४ ॥

---

1. ङ—दन्तिपृष्ठाधिरूढः
   च—दन्तपृष्ठावचूडः
2. ङ, च—भयानुलूलु
3. ख—पारमेया

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तदनु—

इतो मृगकदम्बकं ततिरितो महादंष्ट्रिणा-
मितो गवयमण्डली[1] तदनु कासराणां चयः।
इतश्च करिणां कुलं परमितो गणः खड्गिनां
वनान्तरिति शुश्रुवे शवरसैन्यकोलाहलः॥ ५॥

अथ धरणिपतिरपि[2]—

तत्राखेटकलीलया कटितटे विभ्रत् कृपाणद्वयीं
कोदण्डं कलयन् करे सविशिखं वामेऽसिपुत्रीं वहन्।
आमुल्याप्रसृतं गवाजिनमयीं पादद्वयीं पादयोः
साक्षान्मृत्युरिवाटवीतटजुषां सातङ्कमालोकितः[3] ॥ ६॥

किं च, तत्रापि—

नानासत्त्वनिषेविते तरुलतासन्दोहसम्बाधिते
प्रोन्मीलत्कुसुमावलीसुरभिते शश्वन्मनोहारिणि।
गुञ्जद्भ्रामरमञ्जु[4]वञ्जुललतापुञ्जे निकुञ्जोदरे[5]
काले काननकौतुकात् कलकलः प्रारम्भि लोकोत्तरः[6] ॥ ७॥

तदानीं च—

जालं नीरन्ध्रजालं तरुतलशिखरे वाढमासञ्जयन्तो
वृक्षे वृक्षेऽनपेक्षाः सरभसमसकृत् दण्डमापातयन्तः।
भूयो भूयो विरावानपि तदनु गुणानुच्चमुच्चारयन्तः
कान्तारं ते नितान्तं शवरपरिवृताः कालयामासुराशु[7] ॥ ८॥

---

1. क—गमयमण्डली
2. ङ—वीराधिवीरः श्रीपुरुषोत्तमदेवनृपतिरपि
3. ङ—कुन्तैरन्तकभीषणैर्मृगवधाजीवैर्मृगानैक्षत
4. ख, ङ, च—पुञ्ज
5. ङ—गुञ्जो वनाभ्यन्तरे
6. ङ—व्यातेने मृगयां मृगेन्द्रसदृशो निघ्नन् मृगाननेकश
7. ङ—Ms. Omits this sloka

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

ततश्च—

[ श्वभ्रेऽदभ्राभ्रशब्दानुकृतिकृतिपटुः पाटयन् कोटरस्थान्
खे खेलं तारतारं प्रतिरवविभवात् कन्दरे[1] तुन्दिलश्रीः[2] ।
विश्रान्तं द्राग्दिगन्ते दधदधिकतया नीचयन् कीचकौघा-
नश्रान्तं[3] प्रादुरासीच्छबरविरचितः कालनाया विरावः ॥ ९ ॥

किं च—

चलति कलापी बलति लुलापी[4] सरति समूरुश्चरति चमूरुः[5] ।
अतति मतङ्गी पतति पतङ्गी क्वचिदिति शबरैर्घोषितमवरैः ॥ १० ॥

इत्थमेव—

कल्पान्ताऽवसरोद्वेल[6]बलमानसागररवानुसारिणिमृगयामदमत्तमृगयुशतदत्तकाननकोलाहले, वनान्तःप्रसारिणि, तदाकर्णनव्यथमानमानसतया झटिति परिहृतमृगादनेषु वनेषु, विटपीकूटकोटरतटमपहाय विलायनपलायनव्यापारपारङ्गमेषु भुजङ्गमेषु, मृगयारवदत्तदरसहजकोपेय[7]वृकेषु, सुलभतरचापलचुम्बितचित्ततया अगणितदावपावकेषु कपिशावकेषु, चञ्चलदृगञ्चलाञ्चितदर्शितनानाप्लुतगतिभङ्गिमरङ्गेषु कुरङ्गेषु, भयवशेन निजभवनवनस्थलीमोचनालोचनजनितशोकेषु कोकेषु, सन्निहिततरशबरवरवीक्षणक्षणोत्थितरोषावेशपरवशकम्पितकेशरछटासु केशरिघटासु, यूथाभ्यन्तरनिवेशनेन अनुज्झितमृगालीषु[8]शृङ्गालिषु, विततलताततिकुहरोदरमासाद्य विरचितदेहसम्बरेषु शम्बरेषु, हयचयह्रेषारवाकर्णनोदीर्णकोपतया[9] व्यावृत्य निश्चलतरतारकमिषत्सु वाहद्विषत्सु, अतिशयभयादन्धीकृतलोचनतया अवधीरितशरभेषु कलभेषु, अतिभारितया[10] विद्रावोपद्रवेऽप्यकृतपदोद्धारेषु गोधरेषु, झटिति पलाय्य गृहीतविलकुलेषु नकुलेषु, वेगाविष्टतया[11] पथि पथि पिष्टतरुषण्डकेषु गण्डकेषु[12], आश्रित-

---

1. ख—कन्दले
2. क—तुन्दिलाभिः
3. क—विश्रान्ति
4. च—लुलायि
5. ख, घ, च—पलायते पौत्रि
6. क—कल्पान्तसरोद्वेल
ख, घ—कल्पाऽवसरोद्वेल
7. क—मृगवर दत्तकर सहज कापेय
8. च—शृगालीषु
9. च—कोपताप
10. च—वाहितया
11. ख, घ, च—चेष्टाविष्टतया
12. ख, घ, च—षण्डेषु गण्डेषु

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तुङ्गतरशृङ्गिशृङ्गेषु[1] सारङ्गेषु[2], कृतकन्दरान्तरावगाहेषु वराहेषु, अतिशयशोकपिङ्गलेषु[3] कपिञ्जलेषु, गृहीतातङ्केषु कङ्केषु, दिगन्तरसेवकेषु वकेषु, समुज्झितनिजनिकुञ्जनिष्कुटेषु कुक्कुटेषु, तरुवरदलकुलघनतरमध्यमध्यास्य अतिनिभृतेषु परभृतेषु, दृष्ट्यापि अनासादितदूरेषु मयूरेषु, कलितोत्तुङ्गमहीध्रेषु गृध्रेषु, शुष्यत्तालुतया मार्गितनीरेषु कीरेषु, परिहृतविहारिकासु शारिकासु, अन्यतश्च—

अपि कपिशावे विरचितधावे कृतगतिरङ्गे चलति कुरङ्गे ।
गिरिमतिसभये प्रविशति गवये भुवि वृहदिक्षौ[4] मिलति तरक्षौ ॥ ११ ॥

किं च—एवमेव,

कालनोपद्रुते सर्वतो विद्रुते क्लुप्तभी[5]सञ्चये पक्षिणां सञ्चये[6] ।
भूपतिस्तप्तपञ्चानने कानने[7] व्यातनोत्सासिराखेटकं खेटकी ॥ १२ । ][8]

तदनु—

खड्गेन खड्गिनमसौ गलके विभेद
भल्लुकमेव हतवान् हृदि भल्लकेन ।
शक्त्या जघान करिणं हरिणं शरेण
कुन्तेन कोलकुलमाकुलयाञ्चकार ॥ १३ ॥

अन्यतोऽपि—

निशितशरकदम्बैस्तत्र गात्रावलम्बैः
प्रतितनुरुहमूलं विद्धदेहो वराहः ।
वनभुवि लुठमानोऽरण्यभूदेवतायाः
नरपतिकृतपूजा नीपसारूप्यमापत् ॥ १४ ॥

---

1. च—तुङ्गभृङ्गिभृङ्गेषु
2. क—मातङ्गेषु
3. च—०पिङ्गलेषु
4. च—मिलदिक्षौ
5. च—लुप्तभी
6. क—पक्षिणां चये
7. क—०ऽप्तपञ्चाननेकानने
8. ङ—Ms. Omits the bracketed porti
ie. from the 9th verse to this.

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

प्रदेशान्तरेऽपि—

[ वारिता[1] केनचित्सत्वरं सारिता[2]
पारिता लंघितुं नान्यतः कुत्रचित् ।
दारिता मार्गणैः पृष्ठतः कष्टतो
मारिता शम्बरी काचनाभ्यन्तरे ॥ २० ॥

किं च—

वीरमध्यदुर्गतः कोपिकोपनिर्गतः
साधु धन्वधूनयन् सर्वगर्वमूनयन् ।
तूर्णमेत्य गर्जितैस्तर्जयन्तमूर्जितै—
रच्छगम्यभल्लकेन[3] सोऽच्छभल्लमच्छिनोत् ॥ २१ ॥

क्वचिच्च—

चण्डवेगकाण्डषण्डखण्डितोरुदण्डकं
कोऽपि कोपिचित्तमेत्य संजहार गण्डकम्[4] ।
केनचिच्च घोरघोषक्लृप्त[5]वाद्यवादनः
सायकेन धन्विनापि शातितो मृगादनः ॥ २२ ॥

अपरत्र च—

शुण्डया लालिता दन्तिना पालिता
लुब्धकैः कालिता स्थानतश्चालिता ।
सम्भ्रमोदञ्चिता दन्तिनी वञ्चिता
धन्विनो जाग्रतः संपपाताग्रतः ॥ २३ ॥

सायकैः कर्त्तनं प्रापितानन्तरं[6] तन्वन्तीवावनेः पातिता[7] सा वने ।
तत्परं वीक्षिता स्त्रीति यल्लक्षिता तेन चित्ते नृणां नातनोत्कि[8] घृणाम् ॥ २४ ॥

---

1. क—वारिहता
2. क—गत्वरी
3. Mss. read ० रच्छगत्न ०
4. ख, घ, च—दण्डकं
5. घ, च—लुप्त
6. क—० नर्त्तनं
7. ख—पात्रिणी
   घ, च—पोत्रिणी
8. क—जातनोत्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

क्वापि—

शौनकान्मर्दयन् सैनिकान् नन्दयन् धन्विनो गर्जितैस्तर्जयन्नूर्जितैः[1] ।
कस्यचिद्विष्यतः केशरी मध्यतः पत्रिणा राजमि च्छिन्न एवाजनि ॥ २५ ॥

एवमेव—][2]

कुन्तं[3] गण्डकगण्डके[4] निदधता दन्तीन्द्रदन्तद्वयीं
छिन्दानेन वरासिना छुरिकया शार्दूलमास्कन्दता ।
भिन्दानेन महेषुणापि पुरतो भूदारधाटीं हठात्
भूपालेन[5] पुरे यथा किल वने दुष्टोऽनुशिष्टो न कः ॥ २६ ॥

अनन्तरं[6]—

स च नरपतिः प्रत्यावृत्तिं दधद्विपिनोदरात्
व्यसनमिदमित्युक्त्वा त्यक्त्वा मृगव्य[7]मृगव्ययम् ।
सहसहचरैः [8]श्रान्तिश्रान्तैर्घनोपवनोदरे
श्रमहृतिकृते लीलावापीतटान्तमुपागमत् ॥ २७ ॥

तत्र तु—

वद्धानूपा[9] द्विरदरदनैः स्फाटिकीं यूपयष्टिं
संविभ्राणा मरकतमणीसृष्टसोपानवीथीम्[10] ।
गुञ्जत्पुञ्जीकृतमधुकरस्तोमदिग्धाम्बुजिन्यो[11]
लीलावाप्यस्तदनु नृपतेः शर्मकर्म प्रतेनुः[12] ॥ २८ ॥

---

1. ख—सम्भ्रममुत्पतन् कोपतिस्तग्धधीः सौनकानर्दयन्
घ,च—संभ्रमादुत्पतन् कोपतस्तप्तधीः शौनकानर्दयन् धन्विनोगर्जितैः
2. ङ—Omits the bracketed portion, ie. from वारिता केनचित् o to this.
3. ङ—कुड
4. ङ—काण्डके
5. ङ—तेनानेन
6. क, ख, घ, च—Read the following portion after अनन्तरं
दाक्षिणात्यमागधेन्द्रो विद्यार्णवः परिचेय । इति मनसि चिन्तयन्
7. च—मृगयां
8. ङ—श्रान्तः
च—प्रान्तः
9. च—विद्धा०
10. ङ—स्पष्ट सोपानवीथ्यः
च—सृष्ट सोपानवीथ्यः
11. ङ—भ्राजन्नीलोपलमधुकरस्फीतहेमाम्बुजिन्यो
12. ङ—शर्मणे संबभूवुः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अथ सहचारिणोऽपि—

उपसरसि निषण्णास्ते च षण्णामृतूणां
व्यतिकरकृतसौख्यास्वादसम्मोदभाजः[1] ।
दिशि दिशि परिवार्य्य क्ष्मापतिं संवसन्तो
मनसि वनविहारे लालसामभ्यगच्छन् ॥ २६ ॥

प्रत्यावृत्तमरण्यतः क्षितिपतिं श्रुत्वा[2] च कृत्वात्मनो
रत्नालंकृतिभिः[3] सुवेशरचनां वासो वसानः शुभम् ।
मल्लीशेखरशालिमौलिकलितः कस्तूरिकाचित्रकं
बिभ्राणो[4] गणिकागणः स्वसमये सेवार्थमेवाययौ ॥ ३० ॥

तासामपि—

पीनस्तनी चीन[5]पटावृताङ्गी क्षीनोदरी मीनसहोदराक्षी ।
नवीनभूषाभिरदीनवेशा योषा तदा काचन साधु रेजे ॥ ३१ ॥

तत्र च—

अन्या काचिद्दिनकरभयाच्छत्रयन्ती पटान्तं
ताम्बूलाम्बुद्विगुणितरुचा शोणशोणाधरश्रीः ।
यूनामन्तःस्मितकलिकया शल्यमारोपयन्ती
मध्ये तासामुडुपरिवृता[6] रोहिणीवोल्ललास ॥ ३२ ॥

तासु च—

[7]अपरा सुमनःपराग[8]चूर्णैर्वशीनां चित्तवशीकृतौ पटीयः ।
अलके तिलकं विधाय तिर्य्यक् प्रणिपातं प्रभुपादयोरतानीत् ॥ ३३ ॥

पुनश्च—

एका स्मेरमुखी मुखाम्बुजतटे सन्धाय चेलाञ्चलं
किञ्चिच्चर्वितचर्वणं विदधती ताम्बूलवल्लीदले ।
पश्यन्ती तरुणान्मनागपि दृशःकोणेन शोणाधरा
यूथाग्रे करिणीव[9] मन्थरपदं सञ्चारमासञ्चयत्[10] ॥ ३४ ॥

---

1. ङ—संवादभाजः
   च—सम्मोहभाजः
2. च—स्तुत्वा
3. घ—नृत्नालंकृतिभिः
   च—नूनालंकृतिभिः
4. ख—विभ्राणोऽथ
5. ख—नील
6. ङ—उडुपतिवृता
7. ङ—अपरासु मनः०
8. च—पारग०
9. क—हरिणीव
10. घ, ङ—०मासञ्चयत्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

काचित्काञ्चनशृङ्खलकोल्लसितया भालस्थलीभूषया
शम्पासम्पदुपेतया रविकरैः सम्मोहयन्ती जगत् ।
कर्णाघूर्णित[1]कर्णिकामणिगणैरिन्द्रायुधोद्गारिणी
साक्षाद्रङ्गभुवोऽधिदेवतमिव प्रादुर्बभूवाग्रतः ॥ ३५ ॥

[अनन्तरं—( मिलितासु नृपतेरनुज्ञा[2]लवमधिगम्य )—

काचित् कर्णसुधामयं प्रविदधे गीतेषु रागोदयं
काचिन्मर्दलवाद्यवादनविधौ वैदग्ध्यमादर्शयत् ।
काचिन्नर्तनमानतान नटने रम्भेव सम्भाविता
तत्रेत्थं पुरतः प्रभोर्युवतिभिः सङ्गीतमङ्गीकृतम् ॥ ३६ ॥

एकाभिः शुषिरे[4] समाचकृषिरे के वा न वापि घने
काभाश्चिन् मततं ततेषु[5] विततं चातुर्यमर्थाकृतम् ।
काभिश्चिद् बहुधा निबद्धमुदगा[6]दानद्ध[7]मद्धोद्धुरं
मत्तः केलिबदुत्सवं[8] घनरवं[9] कासाञ्चिदेवातनोत् ॥ ३७ ॥

इत्थमेव रङ्गमध्ये ताभिः —

वाद्यं[10] वाद्यं विरचितमहो मद्य एवानवद्यं[11]
नृत्यं हृद्यं व्यरचि बहुधा मञ्जु मञ्जीरनादैः ।
मध्ये मध्ये क्वचन कतिधा दर्शितो नाऽङ्गहारो
गीतं चान्तं सहजसुभगो दारकेदारगीरम् ॥ ३८ ॥

---

1. क—कर्णाघूर्णित
2. ग—मनोज्ञा
3. च—रताभिः
4. ख, ग—शुषिरे वंशादिके वाद्ये
5. ख, ग—ततेषु वीणादिकेषु वाद्येषु
6. ख—मुरजा
7. ख, ग—दानद्धं मुरजादिवाद्यम्
8. क—केकिवदुत्सवं
   च—केलिवदुत्सवं
9. ख, ग—घनरवंकांस्यतालादिकवाद्यध्वनिः
   च—घनरस
10. क—आद्यं
11. क—एवानवद्यं

(तदनु नृत्यारम्भो निवर्त्य तामित्याज्ञाप्य)

[1]नानाभङ्गीमभङ्गीगीतसुधया[2] [3]श्वस्ताध्वखेदोदयैः
र्वेल्लद्भ्रू लतावीक्षणोद्गतमहासम्मोदलब्धोदयैः ।
आसीनः सखिभिः समं स नृपतिस्तेषां मनः प्रीतये
गत्वा केलिवने प्रसूनविचयः प्रारभ्यतामित्यवक् ॥ ३९ ॥

तदनु ते च— ][4]

यत्किञ्चिन्तितमेव लोलमनसां दृष्टान्त्वं[5] वैभवं[6]
तत्रास्मिन् विदुषेव नैतदधुना राज्ञा किमाज्ञाप्यते ।
इत्याश्चर्यरसादवार्य रभसादन्योऽन्यपर्याकुलाः
कृत्वाग्रे प्रभुमाशु पुष्पविचयक्रीडार्थमभ्याययुः ॥ ४० ॥

( अनन्तरं वनान्तरे प्रविश्य )

सुषम[7]कुसुमजालं दूरतो दर्शयन्तो
विटपिषु घटमानास्तेमिथो घर्षयन्तः[8]
मृदुपवनविधूतोत्फुल्लवल्लीपरागै—
स्छुरिततनव ऊचु[9]र्भर्त्तुरित्थं पुरस्तात् ॥ ४१ ॥

तत्रादौ वैतालिकः —भो भो विराधिवीरवर !

कान्तासङ्गमरङ्गलोलहरिणे माद्यन्मनोवर्हिणे
पुष्पोल्लासविजृम्भमाणतरुणे सत्पल्लवैश्चारुणे[10] ।
नानामन्मथकेलिकौतुकभृते प्रारब्धदुःखच्छिदे
त्वत्केलिविपिनेऽपि सा विजयते या नन्दनाय स्पृहा ॥ ४२ ॥

---

1. च—वाचा
2. ङ—भङ्गमसङ्गगीतिसुधया
3. ङ—श्वस्ता ०
4. क—Ms. Omits the bracketed portion
5. घ, च—रवं
6. च—भैरवं
7. क—सुसम
ख, घ, च—विषम
8. ख—दर्शयन्तः
ङ—घर्षयन्तः
च—हर्षयन्तः
9. क—श्छुरित तत बभूचु
ख—श्छुरिततनवभूह
10. च—चारिणे

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

( पुनरपि राजानमपदिश्य[1] )

एनां केलिवतीं[2] जनीमिव चिरादुद्भिन्नपुष्पोद्गमां
मूर्च्छत् पल्लवरागबन्धमधुरामामोद[3]मापेदुषीम् ।
सुस्नातां मधुनाधुना मधुनिर[4]स्तोमाञ्जनोदञ्चितां[5]
लब्ध्वा य[6]त्पुरुषोत्तमोऽत्र रमते मन्ये न युक्तं न[7] तत्[8] ॥ ४३ ॥

तदनु कियद्गत्वा यूथिकासु[9] रममाणं मधुकरनिकरमालोकमाने नरपतौ तदानीं तरुशिरसि-देव !

मधुपाः परिरम्भमारभन्ते
गणिकानां यदि स स्वभाव एषः
इति जल्पति तत्र केलिकीरे
गणिकाः विस्मितसस्मिताः बभूवुः ॥ ४३ ॥

अन्यत्र महाभागो नरपतिरपि—

देवावधेहि जय जीव धुरन्धरेति
व्याहारकौतुकवतीषु च शारिकासु ।
वैतालिकोचितगिरः[10] श्रवणादकाण्डे
सिंहावलोकनमधाच्छिखरे तरूणाम् ॥ ४५ ॥

सहचरेषु कश्चिदपि—

कलयावनीन्द्र किल केलिकानने
किमिहाद्भुतं क्षितिरुहेषु वीक्ष्यते ।
प्रमदानुबन्धि निजरीतिशालिनो[11]
यदमी वियोगमनिशं बितन्वते ॥ ४६ ॥

---

1. घ, ङ, च—मुदिश्य
2. घ, ङ, च—केलिवनीं
3. ख, च—मधरावामोद
4. ख—मधुवर
   च—मधुकर
5. ख—दर्थतां
6. च—लब्ध्वाऽयं
7. च—च
8. ङ—Ms. reads this verse thus—
एनां केलिवनीं चिराद्दतुमतीं उद्भिन्नपुष्पोद्गमा-
मात्मालंकृतिजालकाञ्चनवतीमामोदबन्धोद्धुराम् ।
सुस्नातां मकरन्दवारिमधुपस्तोमाञ्जनैरञ्चितां
रन्तुं चेत् पुरुषोत्तमोऽद्य वलते मन्ये न युक्तं न तत् ॥
9. ङ—यूथितल्लतासु
10. च—वैतालिकोवितगिरः
11. क—भीतिशालिनो

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

स्त्रीणां दुःस्वभावं दर्शयन्निव कश्चिदाह—

वसतिं दधती भवोपकण्ठे कलयन्ती नवपल्लवेषु रागं ।
किमियं महिला न ते पुरस्तात् पुरतः किंचिदुपैति मालसेव ॥ ४७ ॥

अपरः —

पश्य पश्य नरनाथ सांप्रतं सांप्रतं न किमिदं निरूप्यते[1]
आगता मधुनिपीय यत्पटं संत्यजन्ति मदशालिनोऽलिनः ॥ ४८ ॥

अपरः देव !

भृङ्गी एव पुरतोऽलममानः
कज्जलाम्बुधरजालसमानः ।
वर्त्ततेऽत्र वकुलोपरि भूयः
स्वस्वनैर्विरहिणः परिभूयः[2] ॥ ४९ ॥

तदनु विवेकिनां पुरस्सरो नरेश्वरश्चित्ते विद्यार्ण्णवदर्शनोत्सुकतया विचिन्त्य—

कृताटाट्यापूर्व[3] तदनु मृगयायासपटिमा
ततो नृत्यारम्भस्तदनु कुसुमानामपचयः ।
लयं धत्तामीदृग्व्यसनपरिपाटीति सुहृदो
ब्रुवाणः स्मेरास्यो व्यगमदपराह्णे स नगरीम्[4] ॥ ५० ॥

अथ—

केलीकाननतो निरीय तुरगारूढो नृपः सैनिकैः
संगत्याशु पुरेव भूरिमधुरीभेरीकृताडम्बरः ।
दृष्टा कंचिदननुप्लवं परिसरे विद्यार्ण्णवोह्वयता
मित्यादिश्य शनैः शनैरुपगतः सायं निजे मन्दिरे ॥ ५१ ॥

ततश्च—

आज्ञां स राज्ञः प्रतिगृह्य शीर्षे
श्रीगुण्डिचामण्डपमभ्युपेतः ।
आहूय विद्यार्ण्णवमेव सद्य-
स्तेनान्वितो राजकुलं प्रतस्थे ॥ ५२ ॥

---

1 ख, ङ, च—निरीक्ष्यते
2. ङ—Ms. only has this verse
3. ङ—कृताटव्यापूर्वं
4. घ—नगरं

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अथ तुरगावरूढे नरपतौ क्षणं शुद्धान्तमाविश्य विशुद्धान्तःकरणेन मार्यकर्म समाप्य अभ्यन्तरप्रतिहारीनिवेदितेनाध्वना अवरोधनतो निर्गत्य, सपदि स्कन्धदेशावसक्तमणिगण-खचितचारुचामीकररचित[1]दण्डमण्डितनिकरचामरग्राहिणीकुलसत्वरागमनशिञ्जानकाश्चीरव-मांसाक्षमञ्जुलतर[2]मञ्जीरशिञ्जितेन[3], नित्यनृत्यगीतादिनिजकृत्यविनोदसम्पादनोपनतनटीनट-कटितटान्दोलितरत्नकिङ्किणीजालकिणिकिणिरवानुगतशरीरसौरभानुयायिरोलम्बनिकुरम्बकृत-गुरुतरझङ्कारेण[4], तत्क्षणोपनमदनन्तसामन्त[5]कुलसंभ्रमस्खलितचरणतलाभिघट्टितमणिकुट्टिमनिर्गत-निर्घोष[6]गम्भीरभूतलकम्पसम्पादकतारतरध्वनिना, गमनागमनसमयविधेयप्रणति[7]क्रियाप्रवण-मानसनिरलस[8]समुपेतनृपतिलकायुतनामगोत्रनिवेदनावसरदर्शितनिजाधिकारोचिततत्तद्वर्णनपर[9]-कान्तस्वरदण्डकरप्रतिहार[10]प्रवरमुखकुहरविनिःसृतविज्ञापनाडम्बरेण, परितोऽवस्थितसततमङ्गल-पाठपाठकवन्दीकुल[11]सुन्दरवदनारविन्दवृन्दोद्गतमित्रामित्रक्षितिपतिकुलनानाविधदेशविशेषनिवे-दनकोलाहलेन, पिञ्जरगतशुकशारिकाशत[सततुद्घृष्यमाण[12]मुरहरनाममाला[13]श्रवणपरव-शान्तःकरणपरमभागवतकुलजिगीयमानश्रुतियुगलसुधापुरप्रतिमपूरित[14]वनावलीदावानलोपमहरि-कीर्त्तिकीर्त्तनमयगीतघोषेण, भव्यतरकविवर ][15]विभाव्यमाननव्यकाव्यरसास्वादजनितपरम-प्रमोदलाभलालससहृदयहृदयैकवेद्यसुखविशेषनिर्वृतान्तःकरण[16]साधुजनसाधुवादपूर्वकश्लाघापदो-पन्यासध्वनिना, वैतण्डिकषण्डखण्डितनिजमतसंस्थापनपरमपुरुषार्थपरमपण्डितमण्डलीप्रयोजित-दुर्भेद्यचोद्यविशेषश्रवणमूकीभूत[17]वावदूकप्रतिवादीवदनवीक्ष्य क्षणोल्लसित[18]रोमराजिराजित[19] सपक्षजनजनितजयसूचकविकत्थनवादेन, दिनकरास्तमननिरीक्षणपरिहृतवापीतटशुद्धान्तगतकुलयो-

1. ख, च—चर्चित
2. ङ—Omits मञ्जुलतर
3. च—कङ्कणपुञ्जशिञ्जीतेन
4. ङ—कर्णतटसुखावहगुरुतरझङ्कार
5. क, घ—तत्क्षणोपनतमदनसामन्त
6. ङ—निर्घातनिर्घोष
7. घ—प्रवण
8. ङ—मानसानल
9. च—वर्णपर
10. ङ, च—वर
11. ङ—वन्धुकुल
12. ङ—शारिकोद्घुष्यमाण
13. ङ—नानालाप
14. ङ, च—दूरित
15. क—Omits the bracketed portion
16. ङ—सुखित
17. ङ—मुक्तिभूत
18. क, ख—वदनवीक्षणोल्लासित
19. ङ—राजराजितसहजपक्ष

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

त्कण्ठा[1] प्रधावितकलहंसकुलस्वभावविहितकण्ठप्रसारपूर्वककलध्वनिसन्दोहेन[2], तत्तदधिकाराधिकृतस्वकार्यकरणनिरतकरणकुलकरकम्पित[3] लिखनव्यापारव्याप्रियमाणलेखनीसहस्रोच्छलित[4] चर्चरशब्देन परिपूरितदिगन्तरं, निर्मलतरशारदशशधरसान्द्रचन्द्रिकासन्दोहसुन्दरचन्द्रदीपनिकुरम्बसम्बलनविधूतान्धकारगन्धसम्बन्धबन्धुरम् ,

करदीपितकरदीपिकानिवहहुतवहोपरि परिपतन्निर्मलतरतैलधारासौरभभरतिरस्कृताखिलसामन्तसन्ततिमृदिताङ्गलेप[5] गतचन्द्रचन्दनागुरुपनीरनीरपरिमलप्रवाहं , सुधावदात[6]-भित्तितटविभावितविचित्रचित्रगतकंसरिपुनानावतारचरित[7] निरीक्षणक्षणदूरीकृत[8] दुरितनिवहम् ,

सुन्दरतरचन्दनाचल[9] पटीरवाटिकानिवासनिरतसमीरणसमागममन्दमन्दान्दोलितचारुचन्द्रातपं, निजरुचि[मलिनितचन्द्रदीपिकादीप्तिजालमणिमयस्तम्भसहस्रोल्लासितं, चिररत्नसञ्चयरुचिनिचयकलित[10] दिगन्तरकार्त्तस्वरमयसिंहाष्टकावष्टम्भित[11] सिंहासनोद्भासितं, आस्थानमण्डपमास्थाय प्रवेश्यतां विद्यार्ण्णव इत्या ][12] ज्ञापयति सति झटिति तत इतो धावद्भिः प्रतिहारिभिरागम्यतामागम्यतामिति वीप्सापरैः प्रवेशितो राजदूतेन समं विद्यार्ण्णवः समस्तसभास्तारदृष्टसौष्ठवः सूतोचितखड्गखेटककञ्चुकोष्णीषादपरिच्छदशतपरिच्छिन्नमूर्त्तिर्दूरादेव-प्रणिपातपुरःसरं क्षितिमण्डलमण्डनमणेः श्रीपुरुषोत्तमदेवस्य पुरतो द्वारदेशात् प्रादुरभूत् ।

ततश्च तद्दर्शनादेव मन्दमन्दस्मिताङ्कुरोद्गमनपरिपाट्या प्रदर्शिताधरशोणिमापदेशेन स्वविषयमनुरागविशेषं वहिरेव[13] प्रकाशयन्तं नरपतिमवलोक्य भूयोऽपि क्षितितलचुम्बिचूडामणिना करकमलोदञ्चितेन शिरसा प्रणम्य क्षणं तस्थौ ।

---

1. ङ—कुलायगमनोत्कण्ठा
   च—कुलायोत्कण्ठा
2. ङ—कलभाषितमयकोलाहलेन
3. ङ—करकमलकम्पित
4. ख—विचिर
5. क, ख—Omit 'खिल सामन्तसन्तति मृदिता'o
   ङ—oगृहीताङ्गलेप
6. ङ, च—सुधावधात
7. क, ख—रचित
   ङ—चरितशत
8. ङ—विधृत
9. च—गह
10. च—ललित
11. ङ—Omits the word
12. घ—Omits the bracketed portion
13. घ—बहिरेव

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

मध्ये भूसंज्ञाऽव्ययमात्रतोऽत्र प्रतिहतवेत्रकर[1]करकमलनिषिध्यमानसभ्यजनकृतनादृशनाना-विधध्वनिशतविराममापेदुषि, सकलभागाकुलविनिर्गमनिर्गलद्भाःकारदायमानकृकीभूतकाद-म्बिनीकदम्बडम्बरस्पृशिसभातले समस्तसभाजनविषयापेक्षया विद्यार्णवः सभाजनमधिकं विधित्सुर्धराधिपो मौक्तिकपंक्तिप्रतिमदशनपटलीपरिपूर्णतया घट्टितोद्घटितमुक्तास्फोटपुटानु-कारिणा मुखकमलेन, विद्यार्णव ! गृहं विमुच्यतस्तव कियन्ति दिवसान्यनीतानि, कर्णाटदेशतो जगदीशावलोकनेच्छया श्रीपुरुषोत्तमक्षेत्रमुद्दिश्य चलतश्च इहागमने किं प्रयोजनं भवतीति तस्य सभावजिज्ञासया साकूतं सादर इव[2] स्वयं पप्रच्छ ।

तदनु खल्वेवाऽयं[3] विद्यार्णवो यज्ज्ञात्या मागधोऽपि मूर्द्धाभिषिक्तनृपतिकुलचिन्त्यमान-सुदुर्लभश्रीपुरुषोत्तमदेववदनारविन्दनिःसरदेतादृशस्वागतादिप्रश्नविशेषसभाजनभाजनं भवति । साश्चर्यं सकलसामाजिकैरवेक्ष्यमाणो विद्यार्णवः सर्वमामूलमावेद्य विजयनगर्य्यागमनेन क्षेत्रगतसौधशतविलोकनेन भवदीयपूर्वपुरुषचरितश्रवणप्रवणायास्तत्र च भवद्गुणाकृष्टमा-मानसया[4] निजप्रेयस्या लीलावत्या भवद्दर्शनमहोत्सवश्रद्धावद्ध एव निबन्धनमिति[5] व्यजिज्ञपत् । तदनु क्षितिपतिरपि प्रागेव चरमुखा[6]च्छ्रुतचरं स्वदर्शने लीलावतीलौल्यमेव[7] निजपुरागमने हेतुं निवेदयति विद्यार्णवे साधुरेवायं विद्यार्णवो लोभमूलं सकलं परित्यज्य सत्यमेव[8]-विज्ञापयतीति सज्जनपक्षपातित्वात् परमानुग्रहप्रवणेन मनसा निवेश्यतां निवेश्यतामिति वीप्सया अनिच्छन्तमपि तमाज्ञापयामास ।

स च—( तदाज्ञावज्ञादोषपरिहाराय[9] क्षणं निविश्य सद्यः समुत्थाय पुनः कृतसमुदाचारो दक्षिणवाहुमुदस्य राजानं प्रति ) किं च—भो भो नरेन्द्रकुलचन्द्र !

गोपालीकुलपालिकावृतकथाकादम्बकादम्बिनी
ध्यायात्पर्वतनन्दिनीपतिमनोलीलातमालद्रुमः ।
कालिन्दीतटमञ्जुकुञ्जकुहरे केलीकलाकौतुकी
दत्तां ते शुभमाशु भक्तपटली कीनाशभीनाशकः ॥ ५३ ॥

---

1. ङ—प्रहित only
   च—प्रहितवेत्रकर
2. ङ—साकूतसादरसानुरागवागिवशेषविनोदी
3. ङ—धन्यः खल्वेवायः
4. ख—मानसतया
   ङ, च—मानसाया
5. ङ—निवेदनमिति
6. ङ—omits 'प्रागेव चरमुखात्'
7. घ—कौल्यमेव
   ङ—लोलामेव
8. घ—सत्यमेव मे
9. क—परिहाय

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च—

सद्वृन्दावनलोलुपाद् व्रजपतेर्या देहलीलालसा
प्रत्यग्रोपलसत्पयोधररुचिर्नीलाम्बरोद्भासिनी [1] ।
दन्तीन्द्रैकगतिः स्फुरद्भ्रमरकश्रेणीमनोहारिणी[2]
भूयाद्भूरिभवाय[3] दानवरिपोः सा राधिका सा तनुः ॥ ५४ ॥

[पुनरपि—महाराज !

वैरिवीरकीर्त्तिचन्द्रराहुबाहुशोभिनं
कान्तकायकान्तीपूरलोचनैकलोभनम् ।
चारुकेशकान्तिलेशनुन्नभिन्नकज्जलं
तारतारतारहारभारसम्यगुज्ज्वलम्[4] ॥ ५५ ॥

पुण्डरीकषण्डदण्डदायिलोललोचनं
अर्थहीनभावदीनलोकशोकमोचनम् ।
पाणिपादतुन्दितातच्छकान्तिसारसारसं
त्वामवेक्ष्य राजराज मोदमेति मानसम् ॥ ५६ ॥

( पुनरपि सपरितोषम् ) देव ! अङ्गवङ्गकलिङ्गाधीशच टुलचूडामणिचुम्बितचरणारविन्द-महाराज ! अद्य तव भ्रमणविनोदावसरे अभाग्योदयादिव,

भङ्गीभङ्गुर[5]वल्गुवल्गितवलत्पादातपादाहति
क्षुण्णक्षोणितलोत्थधूलिपटलीधूमान्धकारोदयात् ।
रिङ्गत्तुङ्गतरङ्गपुङ्गवशतादन्तीन्द्रदन्ताङ्कुर-
श्रेणी दन्तुरितामयामयमयी नालोकि सेना तव ॥ ५७ ॥][6]

---

1. क—नीलाम्बरोल्लासिनी
2. क—कृष्णासक्तिरता गजेश्वरगतिर्गोपालिकापालिनी
 ख—दन्तिन्द्रैकगतिस्फुरद्भ्रमकरश्रेणी श्रोणीमनोहारिणी
 घ—दन्तिद्रैकगतिस्फुरद्भ्रमरकश्रेणी मनोहारिणी
3. क ङ—भूयाद् भूपभवाय
4. ङ—भारसम्पदुज्ज्वलं
 च—भावसम्पदुज्ज्वलं
5. ङ—कल्पित
6. ङ—omits the bracketed portion here and reads it after the 61st Verse.

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

भो भो अर्थिकुलकल्पितानल्पकल्पद्रुम,

चिन्ता चिन्तामणौ मे न भवति हृदि वा[1] कामना कामधेनौ
संकल्पे कल्पवृक्षो न पतति[2] हृदयं रोहणे नारुरोह।
कर्णः कर्णावरोधी वलिमपि[3] बलते याचितुं नैव चेतो
मन्ये गण्येत धन्ये त्वयि ददति पुनः को वदान्यो वदान्यः॥ ५८॥

हं हो दीनजनसन्ततिसन्तानक!

दन्तीन्द्राः कति वाजिनः कति कति ग्रामाः कियन्तोऽमला
हारा हर्म्यनिकेतनानि कति ते चञ्चन्ति नेत्राञ्चले।
यत्तस्मिन्नृपते सकृन्निपतिते कारुण्यपूर्णात्तत—
श्चीयन्ते निखिलानि तानि शतशः प्रत्येकमर्थार्थिभिः॥ ५६॥

अये दानशौण्डमण्डलीमण्डन[4]!

राजन् ब्रह्माण्डभाण्डोदरकुहरगते त्वद्यशः क्षीरपुरे
त्वद्दोर्दण्डप्रतापोत्कटशिखिशिखयाप्यन्तरावर्त्यमाने।
यद्यत्पिण्डीकृतं तद्धिमरजतगिरिर्भूय भाति स्म भूमौ
क्षीरक्षीरोदगङ्गामृतमिति च वयं तद्द्वांशं प्रतीमः॥ ६०॥

अये लक्षसंख्यस्थूललक्ष्यकुलमुख्य[5]—

कीर्त्तिभ्यां दानजाभ्यां[6] तव च सुरतरोः सङ्गरे संप्रवृत्ते
त्वत्कीर्त्या तस्य कीर्त्तिः प्रबलतरतया खण्डशः खण्डिता नु।
यत्तत्राद्यापि[7] तस्याः सकलकुलमलं लक्ष्यते वीक्षणीयं
पीयूषं शीतभानुः सुरपुरतुरगः स्वः करी स्वद्रुनीति॥ ६१॥

अये[8] मूर्त्तिमन्[9] कीर्त्तिशालिन्—

शेषाहिर्यस्य मूलं पतदमरधुनी यत्प्रकाण्डं यदीयाः
शाखाः [10]ज्योत्स्नाप्रपञ्चो हिमगिरिशिखरी[11] यस्य बिभ्रंसि पत्रे।

---

1. घ, ङ, च—का
2. घ—कल्पवृक्षेन याति
3. क—कलिमपि
4. ङ—अहो बहुप्रदकलावतंस
5. ङ—अपि दानशौण्ड:
6. क—धनजाभ्यां
7. च—यत्तत्राद्यापि
8. घ—अपि
9. ङ—सर्वातिशायि
10. च—गोस्था
11. ख, घ, च—गिरिऽसौ

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

तारा यत्कोरका यत्कुसुममपि विधुर्यन्मरन्दैकविन्दुः
पीयूषं सोऽद्य राजन् फलतु मम शिवं कोऽपि कीर्त्तिद्रुमस्ते ॥ ६२ ॥

( पुनः श्लेषोक्तिमाश्रित्य सविस्मयमिव )

ब्रूमस्ते किमनङ्गभीमजयिनो रूपं च दोर्विक्रमं
भूभर्त्तुर्गरिमोन्मति तव पुनर्वक्तुं समीहेत कः।
गाम्भीर्य्यं तव देव देव जलधी[1] भूतस्य किं वाक्पथे
वक्तुं को भवतः प्रतापमधुना तेजोनिधेः साहसी ॥ ६३ ॥

राजन् समर[2]कर्मकर्मठ !

पलायितपराजयः पर[3]महान्‌योऽस्तुत्तमा
विभावितमहापदोऽपगतभीरवः क्ष्मापते।
अनीतिभयभागिनो विजयमान[4]लज्जादयो
वसन्ति धरणीतले त्वमिव तावका[5] वैरिणः ॥ ६४ ॥

अयि [6]दुर्घटघटनापटो !

वन्दन्ते शतशः कृताञ्जलिपुटा यान् भूपतीन् वन्दिनो
यैरेव क्षितिवल्लभैर्निगडिताः प्रत्यर्थिनां कोटयः।
ते धीमन्नुभयेऽपि तावकभुजा शौटीर्यपर्याकुलाः
खिद्यन्ते भवनाङ्गणेऽशुभवतो[7] वन्दीकृता शात्रवः ॥ ६५ ॥

वीर, त्वदरिणामवस्थां वर्ण्णयितुमपि न शक्यते। किं बहुना—

निर्य्यन्निर्य्याणपर्य्याहतपटुपटहैः पूरयित्वाखिलाशा-
स्त्वत्सैन्यं वीक्ष्य गण्येतरकरितुरगं दैन्यमासादयद्भिः।
भ्रान्तैः स्वान्तः स्मरद्भिस्तव विकटरटत् शिञ्जिनी[8]शिञ्जितानां
स्वापः स्वापः कदाचिन्न भवति भवतो वैरिवीरैरधीरैः ॥ ६६ ॥

---

1. ङ—जहर्षा
2. ङ—अद्भुत
3. च—पराजयामर
4. च—विनयमान
5. च—तारका
6. ङ—दुष्ट
7. ङ—ष्युभयथा
8. क—शिञ्जिका

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

किं च[1]—

खड्गक्षुण्णविपक्षपक्षसुभटश्रेणीगलाभ्यन्तरात्
प्रोद्गच्छत्क्षतजप्रवाहपटलै रक्तीकृतं भूतलम्।
तन्नारीनयनारविन्दविगलद्बाष्पाम्बुधाराभरैः[2]
सद्यः क्षालयितापि[3] येन भवता के वा न रक्तीकृताः ॥ ६७ ॥

प्रभो समरशौण्ड !

आविद्ध्य बाहुतरसा तरवारिधारां
व्यावल्गतः[4] समरसीमनि खेटकेन।
निर्जित्य वैरिवरवीरगणाननेकान्
वीराधिवीरपदवी न दवीयसी ते ॥ ६८ ॥

भो भो लोकोत्तरगुणशालिन् !

येषां तुष्टोऽसि[5] राजन् सुरदुरधिगमां संश्रयन्ते श्रियं ते
सद्यः सम्पन्नभावात् किमिह भुवि न वा दुर्लभं ते लभन्ते।
येषां रुष्टोऽसि भीत्या [6]वनमनुचलितुं व्याप्रियन्ते प्रियं ते
किं वा बिम्बाधराणां पथि पथि न वचो दुःसहं ते सहन्ते[7] ॥६९॥

महाराज, किमन्यद्भणामि—

दावज्वलन्त्यन्तर्नितान्तं नृपतिलकभवद्यः प्रतापाग्निमूर्च्छत्
ज्वालामालापरङ्गायितविमतधराधीशलीलावतीनाम्।
कान्तारेऽश्रान्तनिर्यद्बहलयुगपयः पुरदूराभिषिक्त—
क्षोणीरुह्म[8]नूतनोद्यत्किसलयकवला मङ्गलं ते कुरङ्गाः ॥ ७० ॥

---

1. क—तत्र त्वयि महाराजे चित्रमालोक्यते, यत
   च—Omits किं च
2. क—पूरोत्करैः
3. क—क्षालयता
   च—पालयता
4. क—व्यावल्गतः
5. घ, च—तुष्टोऽपि
6. घ, च—वनमपि ०
7. घ—दुःसहन्ते
8. क—क्षोणीरुह
   च—क्षोणीरुण्

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

महावीर !

एषा त्वत्खड्गवल्ली [1]सजलजलधरश्यामलच्छायकाया
त्वच्छत्रूणामकीर्त्तिं दिशि दिशि तनुते [2]सूनमात्मानुरूपम् ।
सा यत्सूते त्वदीयं कुसुममपि यशः क्षीरकुन्देन्दुगौरं
निर्व्याजं तत्र हेतुः स्पृशति मम मनश्चन्द्रहासत्वमस्याः ॥ ७१ ॥

अये समदर्शिकुलशिरोमणे[3] !

उन्मीलद्बहुशो भयानवरतो[4]त्कम्पाभिभूताशया
स्वान्तोल्लासितमानयानवलया सद्भावया मन्नया[5] ।
मूर्च्छल्लोचनवारया[6] कुटिलया स्फुर्जत्प्रतापोच्चया
व्यातेने तव सेनया सदृशतां त्वद्वैरिसीमन्तिनी ॥ ७२ ॥

देव ! भवदीयगुणगणवशीकृत[7]मनसस्त्वद्गुणवर्ण्णनसाहसिकये कर्मणि प्रविष्टस्य मम आगन्तवो मन्तवः क्षन्तव्या इत्यभ्यर्थ्यसे । यतः—

अपि भजतु कृशानुर्दाहकृत्ये विरागं[8]
स्वमपि मिहिरधुर्य्याः स्थैर्यमासादयन्तु ।
अपि वहतु पयोधिर्हीनतां पीनतां[9] वा
तदपि तव गुणानां नान्तमालोकयामः ॥ ७३ ॥

अपरं तु परोक्षैरपि पुरोगतैरिवस्थितैः सोमयाजिभिरिव अस्माभिरपि भवतः सन्ततमिद-माशास्यते ।

महाराज—[ (किंचिद्विहस्य) विद्यार्ण्णव ! किं तत् ?

विद्या—( ससंभ्रमं ) भो भो देवाधिदेव !

मातङ्गास्तव सञ्चरन्तु शतशस्तुङ्गास्तुरङ्गा गृहे
वर्द्धन्तां बहवो विभातु भवने कुन्दावदातं यशः ।
दुर्वारस्तव दोः प्रतापतपनः क्षोणीतले खेलतां
जीव त्वं शरदां शतं तव रिपुस्त्वत्सेवया जीवतु ॥७४॥][10]

1. च—सहज
2. च—नून
3. ङ—सकलनिर्विशेषव्यवहारिन
4. ङ—फलदयो
5. ङ—भूमीन्द्र स भाज्यया
6. ङ—धारया
7. ङ—लोभाक्रान्त
8. ङ—अपि वहति निरागदाहकृत्ये कृशानुः
9. ख, च—दीनतां
10. ख,घ,च—omit the bracketed portion

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

महाराजः—( श्रुत्वा ससन्तोषम् ) विद्यार्णव ! के ते सोमयाजिनो येऽस्मन्मातङ्गादिकं[1] सन्ततमेव-माशास्यते।

विद्या—( सचकितम् ) महाराज ! गङ्गवंशनरेन्द्रकुलवर्णनपरो मादृशवन्दीजनजीवातुभूत-वाग्विलासामृतस्यन्दीग्रन्थविशेषो यैरेव प्रणीतस्तत्र च देवस्य विशेषतः कीर्त्तिप्रतापादयो यथामति[2] यैरेव निर्दिष्टास्ते सोमयाजिनः किमिति महाराजस्य न लोचनगोचरी भवन्तीति विस्मये।

महाराजः—( सजिज्ञासम् ) विद्यार्णव, अपि स च ग्रन्थविशेषो भवता कर्णविषयीकृतोऽस्ति ?

विद्या—महाराज ! किमाज्ञाप्यते।

> द्राक्षाक्षेपविधायि[3] साधु मधुनि व्यक्तीकृतारोचकं
> माकन्देऽपि च मान्द्यशालिविमुखं पीयूषपेयुषयोः।
> नेक्षौ रक्षितगौरवं मृगदृशां दन्तच्छदं तुच्छय-
> यस्याकर्णनतो मम श्रुतियुगं[4] कुत्रापि नोत्कण्ठते॥ ७५॥

किं च, देव! प्रभोः कीर्त्तिप्रतापलेशवर्णनापरेण मया अधुनापि यत्प्रस्तुतं तत्सर्वं तद्ग्रन्थ-मुपजीव्योपवर्णितमेव[5]।

महाराजः—( ततः शिरःकम्पमभिनीय ) विद्यार्णव ! ते चास्माभिः परिशीलिता इव प्रतीयन्ते। परं तु किं नामधेया इति निवेद्यताम्।

विद्या—( ससम्भ्रान्त इव ) देवस्य यदि तत्र जिज्ञासा भवति तर्हि सविशेषं विज्ञाप्यताम्[6]।

महाराजः—भवतु।

विद्या—देव!

---

1. च—मङ्गलादिकं
2. ङ—लोकोत्तरनया
3. च—द्राक्षापेक्षविधाविधायी
4. ङ—ऽधुना मम मनः
5. ङ—कीर्त्तिप्रतापवर्णनापरेण मया प्रभोः पुरस्ता-द्यत् प्रस्तुतं तत्सर्वं तमेवोपजीव्योपवर्णितमेव।
6. ङ—भो भो महीमहेन्द्र, यदि नामधेयं पृच्छसि तर्हि सविशेषं श्रूयताम्।

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

अत्रेर्गोत्रे पवित्रेऽजनि जनितमदाद् विष्णुतः[1] श्रीनिवासो
दीक्षावान् तत्सुतोऽभूद्रसमयकविताधामगोविन्दनामा[2] ।
तत्सुनुः सोमयाजी कविपथिपथिको वासुदेवाभिधानः
काव्यं सद्गद्यपद्यं व्यधित तव मुदे गंगवंशानुशंसी ॥ ७५ ॥

महाराजः—(श्रुत्वा स्मित्वा) विद्यार्णव ! वासुदेवरथसोमयाजिनो यदि तर्हि ते चास्मदीक्षणीया[3] एव खलु । परं तु तेषां नव्यकाव्यमस्माभिर्नाकर्ण्णितम् ।

विद्या—(कृताञ्जलिः सन्) देव ! तर्हि कृतमपि निष्फलं भवति । यन्महाराजाकर्ण्णनाय तथा तथा वर्ण्णनोपलक्षितमपि[4] भवदवस्य श्रवणाच्छनीनत्वमुपयाति । किं च, तस्य ग्रन्थस्य प्रयोजनं प्रदर्शयद्भिस्तैरेव महाराजे निवेदनीयं किमपि निवेदितमस्ति ।

महाराजः—(विहस्य) कीदृशं तत् ?

विद्या—अवदधातु देवाधिदेवः । इह हि—

धर्मार्थं किल सिन्धुर्वेतनदीवापी तडागादयो
मोक्षार्थं जगदीशवर्ण्णनपराः श्रीगुण्डिचासम्पदः ।
कामायाद्भुतचन्द्रचन्दनमरुच्चन्द्रप्रभाचातुरी
शेषार्थं पुरुषोत्तमः क्षितिपतिः कीदृङ्नमं वर्ण्णितः ॥ ७६ ॥

महाराजः—(स्मितपूर्वम्) विद्यार्णव ! चतुर्वर्गोपलब्धिफलं ग्रन्थं निबध्नता सोमयाजिना का सा अर्थसम्पत्तिरस्मास्वाशंसिता ।

विद्या—महाराज, तत्र विशेषस्तु प्रभोः पुरस्तात् तैरेव विज्ञापनीयः ।

महाराज—(सकलमवधार्य्य ससन्तोषं) मगधेन्द्रराय ! अपि कतिचिद्दिनानि विजयनगर्य्यां तिष्ठासुरसि किं वा कियत्कालावच्छिन्नगृहविच्छेदो भवन्तं तत्र गन्तुं त्वरयति ।

विद्या—(श्रुत्वा, औत्सुक्यातिरेकेण सास्रमिव भूयो भूयः प्रणम्य विज्ञापयति) राजाधिराज ! देवाधिदेव ! [5]आसेचनकमूर्त्तिं भवन्तं दर्शं दर्शं विबुधानुपापिकालेन यदि कश्चिदलं बुद्ध्या

---

1. क—विश्रुतः
2. क—कविकुलमुकुटं स्फीतगोविन्दनामा
3. क—ते चास्मदीयश्चिरपरिचिता
 ख—ते चास्मदीया
4. ड—महाराजप्रीतये तथा गुणगणव्याख्यानोपलक्षितमपि
5. च—आसेरक

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

युञ्जेत तर्हि तत्र कर्मणि विद्यार्ण्णवो [ व्याप्रियेत तस्य तु गगनकुसुमायमानत्वात् प्रातरेव जिगमिषुरस्मि । यथा रोचते महाराजाधिराजाय । तदनुश्रवणामन्तरमेव मन्त्रः प्रसन्नमूर्त्तिना स्मितलवेन ][1] विद्यार्ण्णवोक्तिमभिनन्दता तेनापि—

ग्रामाः पञ्चगजत्रयी दशहया ग्रैवेयकं कुण्डले
निष्काणां त्रिकमङ्गुलीयकयुगं हारस्तथा कङ्कणे ।
उष्णीषं सहकञ्चुकेन विमलं खड्गस्तथा खेटको
हेम्नां पञ्चशती तदा नृपतिना तस्मै विदायः कृतः ॥ ७७ ॥

तदनु (कुतोऽप्यलब्धचरं तादृशं विदायमादाय परमप्रेमाश्चर्य्यरसाभ्यामवरुद्धहृदयो मगधेन्द्ररायः सविनयमञ्जलिं कृत्वा ससन्तोषं ) देव । हिमकरकरजाल[2]धूतान्धकाराद्भुत-श्रीवृन्दाटवीमध्यशुद्धान्तखेलालसस्वान्तनन्दात्मजारब्धपारावतीशालि[3]वंशीरवामधुरमुरलीकार-वाहूतसंप्राप्तगोपालिकावृन्द[4]सम्पादितानङ्गमातङ्गशृङ्गारसम्पत्तिकृद्रीतिकाडम्बरानन्दसन्दायिनी, दरनिभनिजकण्ठपाशी[5]भवद्दोलतासङ्गिगोपाङ्गनालिङ्गनानन्दसन्दोहमाद्यन्मनःकंसविध्वंसिनाना-विधोल्लासिनृत्त[6]प्रवृत्तोत्सवा, खगतखचरमण्डलीदृष्टपादप्रसारादिनृत्यक्रियाटोपविस्फारिता[7]-रम्भरम्भादिपण्याङ्गनारामभूर्देवदेयादभीष्टं यथेष्टं च ते । इत्युक्त्वा पुनः पुनः प्रणम्योत्थाय यावज्जीवं विद्यार्ण्णवो महाराजस्य क्रीतानुचर इत्यभिधाय वारं वारं व्यावृत्य विलोकयन् शनैः शनैरुदश्रुर्निष्क्रान्तः[8] ।

अथ कविः स्वप्रबन्धस्य चिरकालावस्थानेन सह वहुदेशव्यापकत्वमाशास्ते ।

---

1. ङ Ms. omits the bracketed portion
2. क—जाल
3. च—omits पारावतीशालि
4. घ, ङ, च—गोपालिका बालिका
5. घ—पाशाभव
6. क—वृत्त
7. ङ—विस्मरिता
   च—विस्मापिता
8. ङ—अविच्छिन्नमपि वारंवारमवलोकयन् दृशौ: शनैः शनैर्निष्क्रान्तः

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

यावज्जागर्त्ति शम्भोः शिरसि शशिकला चारुचूडामणिर्वा
लक्ष्मीवक्षोजकुम्भे रचयति मकरीं यादवेन्द्रोऽपि यावत् ।
यावत् कैंकर्य्यकार्य्ये घटयति तरुणान् कामिनीनामनङ्गः
तावद्वाग्वल्लरी मे प्रसरतु परितो गङ्गवंशावलम्बी ॥ ७८ ॥

इति श्री राजगुरुपदवीप्रतिष्ठितवासुदेवरथसोमयाजिकृतौ
गङ्गवंशानुचरिते चम्पूकाव्ये
दशमः परिच्छेदः ।

श्रीचन्द्रकल्पेश्वराय नमः ।

---

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# परिशिष्टम्

## 'च'—पुस्तिकाप्रदत्ता गङ्गवंशानुचरितविषयसूचिका

श्रीरस्तु

मङ्गलाचरणम्, उपोद्घातः—

कलिङ्गदेशागमनं, तत्र रामराजप्रशंसा च ।

### द्वितीयपरिच्छेदः

श्रीकूर्मक्षेत्रगमनम्, तत्र श्रीकूर्मदेवस्तोत्रम्, तस्मात् क्षेत्रात् नौकामधिरुह्य जगन्नाथपुरीगमनम्, तत्र अनङ्गभीमदेवेन कृतजीर्णोद्धारस्य भगवन्मन्दिरस्य दूरात् दर्शनम्, आरामगोपिकानाथस्तोत्रम्, श्रीराधायाः ललिताख्यया सख्या सह संलापः, मदनमोहनभगवद्दर्शनम्, जगन्नाथभगवन्मन्दिरे वटदर्शनम्, विनायकस्तुतिः ।

### तृतीयपरिच्छेदः

श्रीजगन्नाथदर्शनं तत् स्तुतिश्च, तन्मन्दिरस्थ सर्वदेवदर्शनं पृथक् पृथक्, भगवन्निर्माल्या-पूपपरम्परा ।

### चतुर्थपरिच्छेदः

गुण्डिचायात्रायै मन्दिरात् भगवतः वहिरागमनम्, पण्डितमण्डल्याः परस्परं मतचर्चा ।

### पञ्चमपरिच्छेदः

भगवतः गुण्डिचामण्डपप्रवेशः, विमलानाम्न्या देवीसख्याः देवस्य च संवादः, भगवतः गुण्डिचा-मण्डपात् प्रत्यागमनं प्रणयकलहश्च, दशावतारस्तोत्रम् ।

### षष्ठः परिच्छेदः

प्रावृड् वर्णनम्, लीलावत्याः मकरिकया सह संभाषणम्, चन्द्रप्रभारूपादिकं पृष्टवते विद्याधराय मकरिकया तद्वर्णनम् ।

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

## सप्तमः परिच्छेदः

पुरुषोत्तमराजधान्याः विजयनगर्या वर्णनम् , कोकोलनामा नाविकानां ग्रामः , खल्लिकोटजनपदः, पीताम्बरराजश्च , ततः विक्रमपुरं , तस्मात् कोदलाग्रामः, अष्टदुर्गदेशः , जगद्बन्धुनृपः , लङ्गलवेणी-राजधानी , रघुनाथः जगद्बन्धुपिता, रघुनाथानुजौ गिरिधरः श्रीव्यियञ्यसिंहश्च , ऋषिकुल्यानदीतीरे पित्तलग्रामः , धराकोटदेशः जयसिंहनृपतिश्च , खिमुण्डिजनपदे पाटपुरग्रामः , पुरुषोत्तमनामधेयस्य अनङ्गभीमदेव इति नामान्तरम् , अश्वकुल्यानाम नदी , तस्या एव नामान्तरं घोड़ाहोड़ेति ।

## अष्टमः परिच्छेदः

पद्मनाभानङ्गभीमदेवेनासादितः अतएव पद्मनाभपुरनामाग्रहारः , भीमपुरनामा श्रोत्रियाग्रहारः, गङ्गवंशभूपालानां नामानि—ओड्रदेशे कटकराजधान्यां चुडङ्गराजः , तस्य गौड़गङ्ग इति नामान्तरम् , स च गजपतिमुत्सार्य तत्सिंहासने स्वयमुपविष्टवान् । तत्तनयः राजराजेश्वरः , तत्पुत्रः अतिरथः , तत्तनूजः कामदेवः , तत्पुत्रः मदनकामदेवः , तदात्मजः अनङ्गभीमः , ततः नृसिंहः , लाङ्गलनृसिंहदेव इति नामान्तरं , ततः भीमनृसिंहः , ततः पुरुषोत्तमः , ततः कविनृसिंहदेवः, ततः अवटा नृसिंहदेवः , ततः प्रतापनृसिंहदेवः , ततः विश्वशङ्कभानुः ततः वातुलभानुः, ततो वीरभानुः, ततः रुचिकभानुः, ततः मधुपभानुः, ततः कज्जलाभानुः , तस्मिन् दिग्जयाय गतवति कटकराजधान्यां तन्मन्त्रिणः कपिलेन्द्रदेवमभिषिच्य गतवन्तः , ततः गुड़ारिकटके दाक्षिणात्यान् राज्ञ उत्सार्य तत्र राज्यमकरोत् । ततः केषुचिन्नृपेषु गतेषु स्वर्णभानुनामा नृपोऽभून् । ततः कालषण्डः , ततः चुड़ङ्गः , तद्भ्राता हरिमणिः चुड़ङ्गपुत्रः नृसिंहः , ततः अनन्तनृपतिः , तत्पुत्रः पद्मनाभः ।

## नवमः परिच्छेदः

ततः पीताम्बरः , तद्वैमात्रेयः भ्राता वासुदेवनामा तदा युवराजा आसीत् । वासुदेवनृपतिपुत्रः श्रीपुरुषोत्तमः , हरिसेवकमणिः सेनाधिपतिः ।

## दशमः परिच्छेदः

विद्यार्णवेन राज्ञः स्तुतिः , ग्रन्थकारप्रशस्तिः ।

। शुभम् ।

---

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

# श्लोकानुक्रमणी


| श्लोकांशम् | पृष्ठम् |
|---|---|
| (अ) | |
| अखण्डावनीमण्डला | ४३ |
| अग्न्याहिता नियमिनो | १६६ |
| अङ्कक्षोणिशशाङ्के | १७५ |
| अजनि मधुपभानु | १८१ |
| अज्ञानादवधीरितो | १६ |
| अज्ञानाद्विहितापराध | १८७ |
| अतिप्रतापी समयोपजापी | १८८ |
| अतिविदितरागबन्धं | २ |
| अतिवर्त्तुलवर्ण | १३३ |
| अत्युग्रग्राहपुच्छो | २६ |
| अत्युत्तुङ्गतरङ्ग | १६६ |
| अत्र प्रावृट्काले | १११ |
| अत्रान्तरे प्रमदमत्त | ६३ |
| अत्रामुष्य विलक्षणस्य | १४४ |
| अत्रेर्गोत्रे पवित्रेऽजनि | २३४ |
| अत्रेदृक् शतसंख्यसौध | ५८ |
| अथ जय जय घोष | १०४ |
| अथ नरपतिरित्थं | २१३ |
| अथ नाविकैः कलितकै | १४४ |
| अथ प्रभाते पुन | १०४ |
| अथ मुरहरभृत्यै | १०१ |
| अथाहोभिः कतिपयै | १४ |
| अद्य: कनकपट्टिकार | ६७ |
| अनन्तरं कटपटकम्बलादि | १३ |
| अनुजतनुजहीनं | ४० |
| अनुसवनसेवनोद्य | १ |
| अनेकमन्त्रैरपि | १६४ |
| अन्तर्वहिर्गगनवक्ष | ८० |
| अन्या काचिद्दिनकर | २२० |
| अपरा सुमनः पराग | २२० |
| अपापाकृतिहेतोर्निहिता | २ |
| अपि कपिशावे | २१६ |
| अपि भजतु कृशानु | २३२ |
| अपि वचनमधुदवाभिरामं | १२२ |
| अपि श्रितस्वस्तटिनी | ६ |
| अपि स्वप्राणेशं | १६२ |
| अपूर्वं लावण्यं वपुषि | ५५ |
| अप्यन्यैः परितः परीत्य | ७५ |
| अभिनवमदनाभिराम | २०८ |
| अमन्दानन्दमिलदिन्दिरा | ५५ |
| अमृतकदलीमुख्या | ७३ |
| अर्यम्णा स दृगतनु | १८५ |
| अरुणं वरुणाशायामरुतां | १६० |
| अलभत मुहुर्मोद | १८ |
| अलमधिकनिवेदनै | १३३ |
| अवगाह्य सरः श्वेतं | २५ |
| अविरलदलच्छायैः | १५७ |
| अशेषाकुण्ठमहसे | ८१ |
| अष्टाङ्गयोगपरिनिष्ठित | १७१ |
| असारात्मसंसारघोरान्धकूपे | ४३ |
| असूर्यपश्यानामपि | ६८ |
| अस्माकं नयनचकोर | २०२ |
| अस्माकं सदसि शनैः | २०२ |
| अस्यां प्रावृषि शेमुषीमुषि | ११० |
| अहीनवासोऽच्छलिते | ६३ |


*Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com*

| श्लोकांशम् | पृष्ठम् |
|---|---|
| **( आ )** | |
| आकाशान्तर्नितान्तं | ६५ |
| आजन्मनो विविध | १३० |
| आज्ञां स राज्ञः | २२४ |
| आत्रेयाः केऽपि वात्स्या | १६७ |
| आदौ निश्शङ्कभानुः | १७८ |
| आद्याविद्यानुबन्धा | ८१ |
| आधत्स्व कुन्दकुसुमानि | १३७ |
| आधाय तन्मुखसरोज | १२३ |
| आनीयानीय मध्ये | ६३ |
| आन्ध्राणामेष देशः | १४ |
| आपाणिग्रहणोत्सवा | २२ |
| आमुक्तानां मणीनां | ६६ |
| आरुह्यैवाञ्जनाद्रि | २०८ |
| आबाल्याद् भूषणं | ३८ |
| आवेगादनुकृतवास | २१७ |
| आशाकाशान्तराले | १८८ |
| आशाकाशावगाहि | ५३ |
| आसोल्लासमकरा | १६३ |
| आसारैः परिपूरितो | १०६ |
| आसीद् मङ्गो नदीना | १०६ |
| आहूतो दयितनमेति | २०२ |
| **( इ )** | |
| इति विदितगुणे | १७८ |
| इतो मृगाकदम्बकं | २१४ |
| इत्थं गतेषु दिवसेषु | ११७ |
| इत्थं तयोरालपतो | २१२ |
| इत्थं दयिताचाटूनि | १३८ |
| इत्यन्योन्यकृतालाप | १६४ |
| इन्द्रद्युम्नाभिधानक्षितिप | ८८ |
| इन्द्रस्यैवगिरांपती | २१२ |
| इन्द्रावां खर्वगर्वोत्तर | १०७ |
| इहो स्खलति निस्वनः | ४६ |

| श्लोकांशम् | पृष्ठम् |
|---|---|
| **( उ )** | |
| उत्तालप्रतिभवनाचितं | १६७ |
| उत्प्लुत्योत्प्लुत्य | ६२ |
| उत्फुल्लनवकेतकादि | १५८ |
| उत्फुल्लहल्लकवनी | १५८ |
| उत्क्षिप्योत्क्षिप्य | ६० |
| उद्दामद्युतिपुञ्जमञ्जुल | १६४ |
| उद्भ्राम्यश्चक्रचक्रोत्कट | ६६ |
| उन्मीलनकलकोकिला | १५६ |
| उपसरसि निषण्णास्ते | २२० |
| उपात्ते त्वन्नाम्नि | ५५ |
| **( ए )** | |
| एकः कश्चित् | २१७ |
| एकः कश्चित् स्फुरति | ६४ |
| एकः पद्मद्विपाश्वाट | १८५ |
| एकातपत्रमिह | ११८ |
| एकाभिः शुषिरे | २२१ |
| एका सौधशिरस्युपेत्य | २०१ |
| एका स्मेरमुखी | २२० |
| एकोऽयं सकले | १५० |
| एणीदृशः कृतधियो | १२३ |
| एतद्वारिधिवारि | २६ |
| एतस्मात् पुरुषोत्तमा | १७६ |
| एतस्मिन् बलिमण्डपे | ७४ |
| एतस्या निकटे | १७१ |
| एतादृग्विषयानुबन्धि | १७६ |
| एताभिः करदिपिका | ८६ |
| एताभिः कालिकाभिः | ११० |
| एतासां वदनाम्बुजे | १६५ |
| एनां केलिवतीं | २२३ |
| एष क्षेत्राधिदेव | ५४ |
| एष यद्यपिप्रबन्धो | ३ |
| एष श्रीजगदीश | ६४ |

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम | पृष्ठम |
|---|---|
| एषां दानकथा | १५ |
| एषा कापि न | १४३ |
| एषा पुरी प्रियतमे | २०३ |
| ( औ ) | |
| औदार्योर्जितधैर्यवीर्य | २०६ |
| ( क ) | |
| कञ्जाक्षः कमनीयकान्ति | १६ |
| कटिकीदृग् धते | ७० |
| कदाचिन् किं त्यक्ता | ५४ |
| कदा हे सुराध्यक्ष | ४३ |
| कनककुसुमकोरक | १३२ |
| कमलपटलीहासो | ८४ |
| कम्बून काम्बविका | ६६ |
| कलय खञ्जनगञ्जन | १६२ |
| कलयति शशिनं | १३२ |
| कलयावनीन्द्र किल | २२३ |
| कल्पान्तोद्धतवेग | ४२ |
| कविजनमनमो | ११५ |
| कश्चित खञ्जनलोचनाः | १७२ |
| काचिन् कङ्कणमाविपद्य | २०० |
| काचिन कर्ण्णसुधामयं | २२१ |
| काचित्काञ्चनझल्लको | २२१ |
| काञ्ची काञ्चनशालिनी | १४८ |
| कान्तामङ्गमरङ्ग | २२२ |
| कामकाण्डदहना | ३८ |
| का मायाप्रकृतिः | ७८ |
| कार्यत्वाद्ध जलादे | ७७ |
| कालनोपद्रुते सर्वतो | २१६ |
| कालिन्दीजलशोभि | ५० |
| काशीशः कोशलेन्द्रः | ६८ |
| किं गङ्गावारिपूरः | ४६ |

| श्लोकांशम | पृष्ठम |
|---|---|
| किं तोरणानि परितो | |
| किं निद्राति गिरंसु | ६७ |
| किं प्रागस्मि ममाश्रिना | ६५ |
| किं याप्यचेतनतया | ७६ |
| किं वा कालाभ्रखण्डः | ५८ |
| किं वानन्दमश्रवन्ती | ५१ |
| किं वेदाध्ययनेन | ६१ |
| किमारब्धा शौर्ये | १८ |
| किमिति निरपराधे | १०३ |
| किमिव वनकरीन्द्रः | ६५ |
| किमिह बहुभिरुक्तैः | |
| कुक्कुरस्य मुखाद्भ्रष्टं | ५८ |
| कुन्तं गण्डकगण्डके | २१६ |
| कुन्दकम्बुकरिराट् | ५१ |
| कुम्भिस्थः कुम्भिकुम्भ | १८८ |
| कूले वा शमनस्वसुः | ३५ |
| कृतकलकलमुच्चै | २१७ |
| कृताटाट्यापूर्वं तदनु | २२४ |
| कृत्वा राज्यमकण्टकं | १८१ |
| कृष्णामाकृष्य | १०६ |
| केचिन पाथोजमेके | १३४ |
| केचिन्मर्दलकाहली | ६२ |
| केचिन्नाम पठन्ति | ७१ |
| केऽप्यान्दोलित | १६७ |
| केऽप्युच्चैर्मन्त्रयन्तो | १८४ |
| केलिप्रसङ्गमवरोधन | ११६ |
| केलीकाननतो निरीय | २२४ |
| केलीषु तासु न | ११७ |
| के लोके गृहिणो | १०२ |
| कोटिकोटिशतकोटि | ७४ |
| कोटिराङ्गदहार | १५ |
| कोदण्डानि क्रियतां | २१३ |
| को दातृप्रवरः | १६६ |
| कोकीमुज्झति | ८३ |

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम् | पृष्ठम् |
|---|---|
| कौशल्याचित्तवित्ता | ५६ |
| क्लृप्तालवालसुविशाल | |
| क्वचन पतितमभ्रे | ८६ |
| क्वचिड्डमरुडांकृतिः | १६६ |
| क्वचिन्मकरमण्डली | २६ |
| **( ख )** | |
| खड्गेन खड्गिनमसौ | २१६ |
| खगांशोः सायुज्यं किमु | १२ |
| **( ग )** | |
| गङ्गवंशावतंसानां | ४ |
| गङ्गान्वये प्रथमतोऽजनि | १७२ |
| गत्वा कियद्दूरमपेतहर्षं | १४३ |
| गत्वा गत्वा कतिपयदिनैः | २३ |
| गन्तव्या दुरितापनोदनकरी | ६ |
| गाङ्गेयं यमुनासमागमवशा | १६ |
| गाम्भीर्य्यमाप हृदयं | १२० |
| गृहन्ते मृदुवातजातचलन | ३५ |
| ग्रावाणस्तरली भवन्ति | ३६ |
| गोदावरीदक्षिणतीरवासी | ४ |
| गौरेषा यमुनेव | १८४ |
| **( घ )** | |
| घण्टां दूरयताखिलां | १०१ |
| घृष्टामृष्टमहोपलै | २३ |
| **( च )** | |
| चक्रं नक्रशिरोऽपहारि | ६७ |
| चक्रं नक्रादभीता | १४७ |
| चक्रव्यूहविगर्हितानि | १६३ |
| चक्रश्रीकलनपटु | १६२ |
| चञ्चच्चन्दनचन्द्रकुन्द | १८ |
| चण्डवेगकाण्डपण्ड | २१८ |
| चतुराननोऽतिचतुर | ८७ |
| चन्द्रप्रभे हृदयपङ्कज | १३५ |
| चन्द्रांशुव्यतिकरसंभ्रमा | १४२ |
| चन्द्रातपान प्रसरतो | ६६ |
| चरमानुमितः सरमासुतः | २१७ |
| चलत्कर्णपाली भवित्रं | ५२ |
| चलति कलापी चलति | २१५ |
| चातुर्विध्योपपन्नैर्घन | ४५ |
| छिन्नं वा वियदापतज्जलधिना | ८५ |
| चूडाचञ्चच्चारुचन्द्रार्द्ध चूलो | ५४ |
| **( ज )** | |
| जगति महदुपाश्रितस्य | १५७ |
| जज्ञे तस्यापि पीताम्बर | १६० |
| जटिलाः कुटिलान्यभावयुक्ता | ७२ |
| जनयति सुरभर्त्तुर्योविमानं | ६५ |
| जनयन्त्यदृष्टवशतः | ७६ |
| जाग्रज्जह्नुसुताजलो | १५२ |
| जातो धीरशिरोमणिः | १८६ |
| जालं नीरन्ध्रजालं | २१४ |
| जीवनायकमृते तमिदानीं | ३८ |
| जीवे कर्कटकोटरे | १० |
| ज्याटङ्कारप्रसारक्षतरजनी | ५६ |
| ज्वलत्कपालपावकं | ४४ |
| **( झ )** | |
| झम्पझम्पासि कम्पाकुल | २६ |
| झिल्लिझिल्लिमिकाकरा | ५७ |
| **( ट )** | |
| टं टं टं टं रटन्त्यः | ४५ |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकाद्यम् | पृष्ठम् | श्लोकाद्यम् | पृष्ठम् |
|---|---|---|---|
| **( त )** | | तस्यात्मजः स | १७४ |
| | | तस्यापि जातस्तनयः | १७८ |
| ततः परं सत्वरमास | २१ | तस्यामुखाम्बुज | १२३ |
| ततः स रात्रीमनुजानुजाभ्यां | ८६ | तस्या विधातुमिव | १२१ |
| तत्तादृग्धाष्ट्र्य मत्रापि | १०२ | तस्याविरास तनयो | १७४ |
| तत्पुत्रोऽजनि यो | १८६ | तस्यासीत् तनयो | १८८ |
| तत्र स्नात्वा मन्त्रमन्त्रानुसारि | ३० | तस्यासीत्तनुजः | १७४ |
| तत्राखेटकलीलया | २१५ | तस्यासीन्नरसिंहदेव | १८७ |
| तत्रागत्य व्योमभागे | ८७ | तस्यासीन्मल्लविद्यागुरु | १६० |
| तत्रान्तरे जलधरोर्जित | १०६ | तस्याः कण्ठतटं | १२७ |
| तत्रापणेषु परितो | १४६ | तस्यैवासीत् सुतनुतनयो | १८० |
| तत्सूना कियदप्यमन्द | ११७ | तं मत्वा धूमकेतुं | १८६ |
| तत्रापि वैतालिकयोः | ४ | तादृक् प्रदर्श्य मयि | १३७ |
| तत्रोदञ्चदवाञ्चदुग्र | २८ | तादृशगोपीसंचय | ६४ |
| तथापि ते मानस | १७२ | ताभिश्छान्तर्द्विपङ्क्ति | ६६ |
| तदनु दनुजहन्ता | १०४ | तारुण्यमात्मसुखदं | ११८ |
| तदनु निजमनु | १७७ | तुङ्गस्तनाग्रवङ्गी | १८८ |
| तदनु नृपतिरस्मात् | १८१ | तृतीयक्षणमासाद्य | ७६ |
| तदनु मनसि कुर्वन् | २८ | तेनागण्यवदान्यमस्तकमणेः | १७ |
| तदनु स मृगयायां | २१३ | तेनैव प्रतिहारेण | ६० |
| तदवधि मृगनेत्रे | १८२ | तेपे तपो महदधोवदनं | १२६ |
| तद्विज्ञाप्यं ममास्ते | ६० | तैस्तैराचार्यवर्यैरनवगत | ५७ |
| तनयः पुनरस्य | १७८ | तौ मागधौ तत्र | १६५ |
| तन्नाभिकुहरोदरा | १२३ | त्रिगुणात्मिकाप्रकृतिरेव | ७५ |
| तपति तपरतीव्रद्योतै | ८१ | त्रिजगति न पदं | १८६ |
| तपनातपतापतापिता | ८१ | त्रिभुवनयुवधाटीकोटि | ११२ |
| तस्यासीत्तनयो | १७५ | त्वं निःसङ्गो विहरसि | ८० |
| तस्मात् क्षीराम्बुराशे | १६३ | त्वच्चातुरीशतनिरीक्षण | १३७ |
| तस्मादासीन्नृसिंहो | १७६ | त्वां कस्मात् प्रसमीक्ष्य | ५३ |
| तस्मादुद्दामवाहु | १७६ | **( द )** | |
| तस्मिन्नरेन्द्रतिलके | २१३ | दण्डं दत्वाण्डकोषे | ६६ |
| तस्मिन्नैकगुणप्रवाह | १७० | दण्डं सौवर्णमुच्चैः | १८८ |
| तस्य पुरस्तात् पवनः | ८७ | दण्डादण्डिप्रकारं पथि | ६५ |
| तस्याजनिष्ट तनयो | १८४ | दण्डे दण्डधरो बले | १५० |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशाः | पृष्ठम् |
|---|---|
| दधन् कुसुमधन्वनो | १७४ |
| दन्तच्छलेन मुखसंपुटके | १२६ |
| दयितसंगमसत्वरचेतसां | १६० |
| दानं केऽपि दिशन्ति | ७५ |
| दानं मानपुरःसरं | १८६ |
| दाहोत्तीर्णसुवर्णनिर्मित | ६७ |
| दाहोत्तीर्णसुवर्णवर्णरुचिरा | ५१ |
| दाहोत्तीर्णसुवर्णवर्णविलसत् | १८२ |
| दाक्षिण्येनोपयान्तं | १६० |
| दिग्वासः पुरतः | १५२ |
| दिग्भागान् वधिरी | ७१ |
| दिग्वारतारतिथिलग्न | ८ |
| दिग्वासः पुरतः समित् | १९७ |
| दिनकरः स्वकरेण | १६१ |
| दिशिदिशि मुदा | ८४ |
| दीनानाथैकबन्धुः | १९३ |
| दीर्यन्ते भूमिभागा | ८३ |
| दुर्वारप्रसरतमालसत् | १९७ |
| दुर्वारा धरणौ पतन्ती | ७१ |
| दुष्पूरोदरपूरणाय | ४ |
| दृष्टेयं स्मयशालिदुर्ज्जन | १९९ |
| दृप्यद्दुर्जनसंघसंहृति | १७६ |
| दृप्यद्दोर्दण्डलीलादलित | ५६ |
| दृष्ट्वा जानपदान् | १९७ |
| देवावधेहि जय जीव | २२३ |
| देवेषु चाविरभवत् | १७३ |
| देशा ये वीक्षितास्तेषु | ६४ |
| देशे देशे प्रविशति | १४ |
| देहाद्यारम्भकं यत्तदपि | ८० |
| दैतेयैरादितेयान् | १०५ |
| दैत्यानत्यादरेण | १०७ |
| दोर्भ्यां श्रीरामराजस्य | १५ |
| दोर्दण्डाकान्दनश्रीकृत | १८२ |
| दौर्भाग्यं किल दूरयन् | ६७ |
| द्युमणिरेव दिवापि | १६१ |
| द्राङ्नीवी शिथिला | ११३ |
| द्राक्षादाडिमनागरङ्ग | ७४ |
| द्वन्द्वानामजनि रतेषु | १८३ |
| द्वारस्थो द्वास्थः कोऽपि | ४१ |
| द्विप्राः कुत्र क्वचापि | ९ |
| द्विजिह्वकोत्सारण | ३ |
| द्विषामकीर्त्या तमसाव | १९२ |
| द्वेषोऽस्ति चेन्न | १३७ |
| **( ध )** | |
| धत्ते चित्ते न वारिव्यसन | १०५ |
| धनुर्ध्वनिं यस्य निशम्य | १९२ |
| धर्माचारपरिक्षतारिनिकरः | १९० |
| धर्मोऽपि नर्मसचिवत्वमुपैतु | १३८ |
| धाराभिर्दुर्द्धराभिस्तपन | १०६ |
| धूलीषु केलिमनपेक्ष्य | ११६ |
| धृतशरीरमिवाम्बुज | १६२ |
| धृतामन्दामोदं | १२ |
| धैर्यध्वंसिरणन्मुरारि | ७१ |
| ध्याते यस्मिन् समन्तात् | १९५ |
| ध्यायन्तीनां मुरहरवपुः | ३७ |
| ध्वान्तं जर्जरयंस्तमोऽति | १६३ |
| **( न )** | |
| नखद्योतैर्जुष्टं न | १२ |
| न च भवति कुहूनं | १२१ |
| नत्वा नत्वा दण्डवद्भूमिभागे | ८६ |
| न तु भजति सुधाकरे | ११४ |
| नन्दितव्रजपुरीपुरन्दरं | ४० |
| नमस्ते नमस्ते भवानि | ५३ |
| न यः स्म धत्ते तृणमेक | १९६ |
| नरपतितनयामुखे | १२६ |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम् | पृष्ठम् |
|---|---|
| नरेन्द्राणामुच्चैर्द्रविण | ५ |
| नलिनमाविवियोगविपद्दशा | १६० |
| नवजलधरधाति कान्ति | ४४ |
| नष्टे दुर्दैवयोगादिव | ८५ |
| नानाभङ्गिममाधुरीषु | १७२ |
| नानाभङ्गीमभङ्गीत | २२२ |
| नानाशाखोपगूढागमविषमपथा | ८६ |
| नानासत्वनिषेविते | २१४ |
| नालोकि येन जगदीश | १० |
| नास्था गेहे समजनि | ३७ |
| निखिललोकगतागत | १६१ |
| निखिलहृदयबन्धे ये गुणा | ६१ |
| निजार्द्धं सं लसच्छबि | ४५ |
| नित्यं रजोहतिहतद्यु | १४१ |
| निपतति घनसारसारशीते | ११४ |
| निर्गच्छसि यदीय | १४१ |
| निरातङ्कं चन्द्रार्द्धचूडाङ्कशायी | ४२ |
| निवसति नयनोदरे | ११४ |
| निवेदयावो भवने त्वित्वा | १४३ |
| निशाटनाशिनि भरतानुशीलिते | २ |
| निशितशरकदम्बैस्तत्र | २१६ |
| निश्शेषावनिमण्डलाधिपतिभिः | २० |
| नृत्यन्त्यप्सरसोऽपि येऽत्र | १०२ |
| नैतादृक् प्रसरति | १४२ |
| नो वा शङ्करशाङ्करि | ३४ |

( प )

| श्लोकांशम् | पृष्ठम् |
|---|---|
| पङ्कं यस्माच्चिल्लिखं | १४३ |
| पक्षं कंचन नेक्षते | १७७ |
| पञ्चालिकापरिणये | ११६ |
| पञ्चेन्द्रियाणि यमिनां | १२६ |
| पञ्चेषुणा निखिल दिग्विजयो | १३१ |
| पञ्चेषुनिर्जितमहीतल | ११८ |
| पत्रावलीपरिगता | १२६ |
| परकृतपरिभावं | ८४ |
| परमतिविमलाव शरीरे | १३१ |
| परं दधाना बहुधान्यता | १६५ |
| परात्परं निरञ्जनं | ४४ |
| पश्यन्ती सखि वसुधा | २०२ |
| पश्य पश्य नरनाथ | २२४ |
| पश्येते पथिकाश्चिरप्रणयिनी | १७५ |
| पक्षं कंचन नेक्षते | १७७ |
| पाणिं पाणौ घट्टयन्नट्टहासं | ७१ |
| पादप्रयाणकुतुकी | ६० |
| पादं कुर्वन् क्ष्माभृत्कुल | १८० |
| पारावारोऽन्तरालप्रसृमर | २७ |
| पित्रारब्धं तदनु सदनं | १५५ |
| पित्रोः प्रमोदविभवं | ११६ |
| पीता तापमपोहते | १५१ |
| पीनस्तनी चीन | २२० |
| पीयन्ते जलदाः जलानि | २८ |
| पीयूषं वा किमेतत् | १२४ |
| पुन्नागनागेश्वरकोविदार | ७० |
| पुच्छान् प्रोत्सारयन्ती | १४५ |
| पुरः पित्रोः रेतः | १८५ |
| पुरुषा विमर्दमृदिताः | ६८ |
| पुरो दिग्वतंसकः | १६४ |
| पुण्यं श्वो भविता न | १० |
| पूर्णं तूर्णं स्थापितं | १३ |
| पूर्वाद्रेरिव | १४८ |
| पृष्ठापृष्ठि वितन्वते | ६१ |
| प्रजारक्षादक्षः क्षत | १७३ |
| प्रणयप्रसरवशम्वद | २ |
| प्रणिपातकालकातरमनसः | १ |
| प्रतिकर्मकृते भवद्भिरेवं | १०० |
| प्रत्यग्राम्भोदभिन्नाञ्जन | ४८ |
| प्रत्यर्थीप्रमदप्रदानपटुना | १६ |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम् | पृष्ठम् |
|---|---|
| प्रत्यावृत्तमरण्यत: | २२० |
| प्रत्युप्तोद्दीप्तसप्ताङ्कुर | १८ |
| प्रमुदितवसुधाभि | १८० |
| प्रयत्नतो वा गणये | १७२ |
| प्रयाणभङ्गाय तु यस्य | १६४ |
| प्रलयमृच्छति पङ्कजवान्धवे | १६१ |
| प्रात: प्रीतमना निरीय | ११ |
| प्रात: समुत्थाय च | ८८ |
| प्राभ्वं प्रश्वंसिताश्वक्लम | ३० |
| प्रान्तरेऽपि प्रयातस्य | ११ |
| प्राय: पर्वतकन्दरेषु | ८६ |
| प्राय: सौरभचौर | १७१ |
| प्रायेणानल्पदृष्टि: | १६१ |
| प्रासाद: परिचीयते न | ६२ |
| प्रेङ्खोलच्चामरोर्मिप्रकर | ६८ |
| प्रेमार्द्रि पत्यपत्ये गुरुषु | ३६ |
| प्रोद्यत्तालतमालपूग | १६७ |

( फ )

| श्लोकांशम् | पृष्ठम् |
|---|---|
| फुल्लेन्दीवरवृन्दनिन्दन | १३६ |

( व )

| श्लोकांशम् | पृष्ठम् |
|---|---|
| बलिमदनगताया | १५५ |
| बुद्धं बुद्धमनङ्गभीम | १६६ |
| ब्रह्मब्रह्मर्षिविस्मापन | १०६ |
| ब्रूते व: श्रुतिरेव | ७७ |

( भ )

| श्लोकांशम् | पृष्ठम् |
|---|---|
| भक्तस्वातान्तरोत्थाशुभपटल | ११ |
| भक्त्युद्रेकं भक्तवन्धौ | ८८ |
| भर्त्तारं निजसविधे | २०१ |
| भर्त्तारं प्रणयावरूद्धहृदया | ५ |
| भर्त्तुश्चेतसि भङ्गिभि: | १३६ |
| भर्त्तु: पुरो ज्वलित | ६६ |
| भयं दधाना इव | १६२ |
| भुक्त्वा भोगान् मुक्त्वा | १०० |
| भृङ्गी एव पुरतो- | २२४ |
| भृङ्गो भङ्गिरसालसा | १५६ |
| भ्रमद् भ्रमरमण्डली | १५८ |
| भ्रान्तं महीतलमशेष | १५३ |
| भ्रामं भ्राममहर्निशं | ३१ |

( म )

| श्लोकांशम् | पृष्ठम् |
|---|---|
| मच्चित्ते कचकोरचञ्चु | १३४ |
| मत्स्याद्या येऽवतारा | १०७ |
| मदनशवरभर्त्तुर्यन्त्र | १३३ |
| मधुकरवधूपानागारं | १५६ |
| मधुपा: परिरम्भ- | २२३ |
| मध्यं पश्याद्यहन्तु | ६८ |
| मन्त्रित्वान् पुरुषोत्तमस्य | २१० |
| मन्दोद्गीर्णै: प्रियतम | १३६ |
| मन्ये द्रागधुना | १५६ |
| मलयकुलाचलजन्मा | १५७ |
| मलयगिरितटी | १५८ |
| मलयशिखरिशङ्ग | १५६ |
| मल्लीवल्लीमतल्ली | ११० |
| मल्लेस्तदानन्दभर | १०३ |
| माकन्दे मकरन्दवृन्द | १५६ |
| माकन्दे मकरन्दशालिनि | १६ |
| मात्सर्येण बुधा मुधा | १५३ |
| माद्यन्तोऽद्य चतुर्विधं | ६७ |
| माद्यन्मरालगृहिणी | १३१ |
| मा पुन: प्रभुतनौ | ६७ |
| मार्गोऽप्ययमतिदुर्गो | २५ |
| मालिन्यं प्रसरति | १८३ |

| श्लोकांशम् | पृष्ठम् |
|---|---|
| मित्राणि तव वर्द्धन्तां | २० |
| मित्राद्याः स्पृहयन्ति | ६२ |
| मित्रामित्रकलत्र | १७६ |
| मिलत्युच्चकै स्तावकीन | ५३ |
| मिष्टान्नं क्षुधितो यथा | २०८ |
| मुकुलिते परितो | १६२ |
| मुखे विचुम्बन्नपि | ३ |
| मुदाद्युक्तैर्भक्तैः | ६७ |
| मुरहरपरिवाराः | १०१ |
| मुरारिपदपातनस्फुट | ६३ |
| मूर्त्तामूर्त्त द्विधा ते | ८१ |
| मृधेऽर्द्ध चन्द्राशुगसंघ | १६२ |

( य )

| श्लोकांशम् | पृष्ठम् |
|---|---|
| य इदं पठति प्रेम्णा | ४३ |
| य इह कमलसौरभं | १२२ |
| य एकवीरः प्रसभेन | १५० |
| यत्कीर्त्तिक्षीरनीराकर | १९६ |
| यत्तेजोऽनलदह्यमान | १५० |
| यत्पादप्रवणाः | ६० |
| यत्र ज्यां समुपागते | १५१ |
| यत्र प्रविश्यैव | १४७ |
| यत्र श्रीजगदीशपाद | ६ |
| यत्राङ्गुष्ठपुरस्तादाविर्भूतः | १ |
| यत्रावासमुपैति | ८६ |
| यत्सेना घूलीधारा | १८४ |
| यत्सौधे मणिमयकुट्टिमे | १४१ |
| यदतनुशवरेण पातितं | १२६ |
| यदवधि विमलाया | ११२ |
| यदवधि सरसीरुहं | १२४ |
| यदा यद्यल्लोके | ८४ |
| यदि भवति मनः | १२० |
| यदि विधिवशतः क्षणं | ११४ |
| यदिह मुकुलीभूतं | ६३ |
| यद्वीक्ष्य क्षणमुन्मिषन्ति | ५५ |
| यदीयकोदण्डविनिर्गता | १६५ |
| यदीयबाहुद्रविणा | १४६ |
| यद्दोर्दण्डद्रुमोद्गतकर | १६४ |
| यद्यप्युच्चै रन्तुमिच्छा | ७७ |
| यन्नश्चिन्तितमेव | २२२ |
| यन्नो दृग्विषयो | ७८ |
| यया पूर्वं पूर्वामरहनन | ५४ |
| यस्ताद्दग्यज्ञवाटे | १०६ |
| यस्त्वां दन्तावघातैस्तु- | २११ |
| यस्मादेतानि भूतान्यपि | ७७ |
| यस्मिन् वीराधिवीरे | १६१ |
| यस्मिल्लोकोत्तरेयं | १०० |
| यस्य द्वेष्यो दशास्यः | १०६ |
| यस्य प्राणसमा | १४६ |
| यस्याक्रान्ति भयेन | १६८ |
| यस्यास्तं व्रजराजनन्दन | ६ |
| यस्यैकस्य पलायमान | १४६ |
| यस्यैव यत् प्रकृति | १३३ |
| यं नत्वा न लुठन्ति | ३२ |
| यं पारिजातमपि | १६८ |
| यः पारावारवारि | १८६ |
| यः पूर्वमेव भगवान् | ७० |
| या कार्ष्णाय सनील | १७० |
| या त्वज्ञानावतारेष्विव | ६० |
| यान् कण्ठे कलयन्ति | २०६ |
| यानारूढाः केऽपि | ७५ |
| यान्त्यायान्ति सहस्रशो | २७ |
| यान्यक्षराण्युद्भवन् | १२७ |
| यामाप्तुं सुधियः | २२ |
| यामासादयतो विशन्ति | २१ |
| युक्ता युक्तिबलेन | ७६ |
| युद्धच्छिन्नारिमूर्द्धप्रकर | १६५ |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम् | पृष्ठम् |
|---|---|
| युद्धश्रद्धातिमाद्यत् | ५६ |
| युद्धश्रद्धाप्रवृद्धद्रढिम | १८४ |
| युद्धश्रद्धां प्रवृद्धां | २११ |
| युद्धेऽनर्गलनादभुजार्गल | १५२ |
| युद्धेऽनर्गलयद् | १९६ |
| यूनां विदूरगमनव्यसनो | १५१ |
| येऽत्र क्षेत्रवरे पुराकृत | ३१ |
| ये जीवनाय वदने | १२५ |
| ये देशाः परिशीलिता | १७० |
| येन प्राक्कल्पगजोर्जित | १०५ |
| येन प्रागुदितेन | ८३ |
| येनासाद्य कुचद्वयेन | १८८ |
| येनानेनातिभक्तो | ६१ |
| येनामन्थि पुरा | २५ |
| ये निर्वाणपथार्थिनो | ६६ |
| येऽमी लोचनगोचरा | ७२ |
| ये मां पुरा सुतनु | १३८ |
| येषामयं परिसरे | १४७ |
| यैरन्तः प्रथमं प्रविश्य | १३५ |
| यो गर्वान्मलयालय | १५७ |
| यो जातः स्मरभीम | १७५ |
| यो दोषाकरपदवीं | १९८ |
| यो धातुघूर्णरन्ध्रा | १०५ |
| यो यो विभक्ते यद् | ६९ |
| यो लेभे मगधेन्द्र | ४ |
| यो वन्दीकृतविप्रयोगि | १६३ |
| **( र )** | |
| रचयति न तु चन्दनं | ११४ |
| रणाद्बहिर्भूय | १५२ |
| रति रतिपतियुग्मं | १८८ |
| रतिसुखदतया | १२९ |
| रसालसाले सितसायकेन | २१७ |

| श्लोकांशम् | पृष्ठम् |
|---|---|
| राजन्येकमणेर्महाद्भुतरणे | १९१ |
| रामराममितानब्दान् | १८१ |
| रुचिररुचिभरै | १२२ |
| रेखा काचनकाञ्चनीव | ९४ |
| रे पान्था मन्थरत्वं | ११० |
| रे रे काणादकाणः | ७६ |
| रेवतीनयनचित्तचकोरी | ५१ |
| **( ल )** | |
| लङ्कास्त्रीणामनिष्टः | १६४ |
| लाक्षाधातुद्रवाद्दारुणिम | ३५ |
| लावण्यपुरमवगाह्य | १३० |
| लिलङ्घिषा यथा | ८ |
| लुण्ठन्ती भूपृष्ठे | ९२ |
| लोकानामभियोगिनां | ३१ |
| लोकारिङ्गत्तुरङ्गे | १८३ |
| लौल्याद्गवाक्षविवरे | १६५ |
| **( व )** | |
| वक्रीकृताञ्चलतया | १२४ |
| वक्त्रं तावकमस्ति | ९१ |
| वदनविधु विलोकने | १३० |
| वद्धानूपा द्विरदरदनैः | २१९ |
| वन्दन्तामथ कोऽपि | २० |
| वन्दन्ते सततं यदङ्घ्रि | ७० |
| वराभीतिपाशाङ्कुशा | ४३ |
| वसतिं दधती | २२४ |
| वहतो वियोगिदलन | १५७ |
| वाञ्छन्ति पितरो | ५ |
| वाणीविलासमदनो | १२७ |
| वात्स्याः केचन पण्डिताः | ५२ |
| वाद्यं वाद्यं विरचितमहो | २२१ |
| वारिता केनचित्तत्त्वरं | २१८ |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम् | पृष्ठम् |
| --- | --- |
| वाल: छ्तकरतालो | ७१ |
| विकिरति परितोऽमृताम्बु | १२४ |
| विशाप्याभवदीश्वरी | १०२ |
| विपरीतकेलिकुतुक | २ |
| विपक्षाटवीबद्धदावाग्नि | ४२ |
| विप्रोऽथ वन्दी मगधो | १५४ |
| विभ्राणोऽदभ्रमाद्यद् | ९८ |
| विमले विचिन्तय | ९० |
| वियदराजकमेष | १६१ |
| विरहानलमेदुराशया | १६२ |
| विरहिहरिणश्रेणी | १५५ |
| विशाल: सालोऽयं | १६९ |
| विश्वामित्रस्य सत्रे | ५६ |
| विष्णोर्निर्माल्यमाल्यं | ६९ |
| विष्णोर्वक्ष:स्थलस्थ | ६६ |
| वीणागोष्ठीवधिर | १७ |
| वीणानामपि परिवाद | १८३ |
| वीथी वीथीमयमुपगतो | १४७ |
| वीरमध्यदुर्गत: | २१८ |
| वृहद्वृंहितै: पूरित | ४३ |
| वैडुर्योपलघटित | १४२ |
| वैमात्रेयस्तदीय | १९० |
| वैरञ्चोऽपि विपञ्चीं | ८७ |
| व्युष्टा निशान्ते प्रतिपद्य | ९० |

( श )

| श्लोकांशम् | पृष्ठम् |
| --- | --- |
| शरावलीदर्भसमूह | १८५ |
| शरावलीलुञ्चितगात्र | १९६ |
| शश्वच्चिदानन्दघन | १०७ |
| शश्वद्धर्मपरो नयेकसदनं | १४४ |
| शङ्खारिपङ्कजगदा | ५३ |
| शारदशशधर | २ |
| शिखिचन्द्रकरोचि | २ |
| शुण्डया क्षालिता | २१८ |
| शुद्धं बुद्धं वस्तु | ७९ |
| शुभ्रादभ्राभ्रमाला | ५१ |
| शूद्रैर्दत्तं भुञ्जते | ५८ |
| शून्ये तादृशि मन्दिरे | ९६ |
| शेषे शेषे यदिह | ४५ |
| शौनकान्मर्द्दयन | २९१ |
| श्रीकूर्मदेववर | २६ |
| श्रीनीलाचलतुङ्ग | १ |
| श्रीमन्तौ द्वावेकदा | ८७ |
| श्रीरङ्गेश्वरतुङ्गशैल | २३ |
| श्रीवृन्दावनभृङ्गो | १ |
| श्रीशप्रासादबन्धाद्भुत | १७६ |
| श्रुत्वा तं कपिलेन्द्र | १८२ |
| श्रेयांसि बहुविघ्नानि | ९ |
| श्वभ्रेऽदभ्राभ्रशब्दा | २१५ |
| श्वश्रुवीचाश्रुवर्षे | ७४ |

( स )

| श्लोकांशम् | पृष्ठम् |
| --- | --- |
| स एष क्षितिभृत् | १९४ |
| सकलश्च किमस्ति | १३४ |
| सकलसरसिजै: | १३२ |
| स च तत्क्षणमुद्धत | १३६ |
| स च नरपति: | २१९ |
| सजलजलदगात्रे | ३७ |

Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम् | पृष्ठम् |
| --- | --- |
| सत्कान्तारसरागसक्त | १६१ |
| सत्काव्यः प्रवलतमः | १६६ |
| सत्यं सन्ति सहस्रशो | २७ |
| सद्वंशप्रभवासु | १२० |
| सद्रामाकलितविलास | १४२ |
| सदा चतुर्वर्गनिसर्ग | ३ |
| सन्तोषवन्तः स्वत | ३ |
| सन्त्येते जलराशयः | ४१ |
| सप्तर्षिप्रतिमप्रभाव | १८६ |
| समर्द्दादिकमेव | १०४ |
| सम्मर्देमृद्यमाना | ६ |
| समीक्ष्य वक्रविधुं | १६१ |
| सर्वात्मा भगवानिति | ५२ |
| संगीतकर्मणि तथा | ११६ |
| संग्रामाङ्गणसङ्गि | १८६ |
| संग्रामारामसीमोत्थित | ५७ |
| संजाता किल विटपा- | १८३ |
| संदिग्धे कृत्यवर्त्मन्यु | २१२ |
| संभाराः सम्भ्रियन्तां | ८ |
| संवृत्तावर्त्त वात्यारभस | ६२ |
| संसारपाशनिस्पन्दे | ५ |
| संसाराम्बुनिधौ निपत्य | १३ |
| सा तेनातिपराङ्मुखी | ११३ |
| सार्द्धं सुरेन्द्रविनन्दन | ८७ |
| साध्वीनां कलितादिशां | १८७ |
| सायकैः कर्त्तनं प्रापिता | २१८ |
| सा या नदी | १४५ |
| सिन्दूरसुन्दर | १६५ |
| सिंहसंहननसुन्दरमूर्त्तिः | ५१ |
| सीतानीताब्जमाला | ५० |
| सुतनुलसदपाङ्ग | १२५ |
| सुधाकृतसुधाकरं | १६१ |
| सुभद्रावलभद्राभ्यां | ६६ |
| सुषमकुसुमजालं | २२२ |
| सुषमकुसुमः क्लृप्ता | १०० |
| सूनाशुगोऽपि | १२१ |
| सैषा पण्डितमण्डली | ७५ |
| सोऽयं चित्रचरित्र | १०३ |
| सोऽयं वाजिनमाजिरङ्ग | २१० |
| सोल्लासं सुरचितराज- | १८७ |
| सोऽसौ तत्त्वसमाः | १७८ |
| सोऽसौ विश्वम्भराख्यः | १८८ |
| सौधश्वेतातपत्रस्फुट | ४६ |
| सौवर्णान् भद्रकुम्भानुपरि | ६५ |
| स्तिमित शकुनि | १११ |
| स्त्रीणां मोहनमञ्जरी | १४६ |
| स्थातुं चिरं न पुरतः | ११७ |
| स्थानमृष्टतया कुशाङ्कुर | १७ |
| स्थाने गगनाभोगे | १११ |
| स्थाने स्थाने ब्राह्मणा | ७३ |
| स्नात्वेवामृतवापिका | १७१ |
| स्नानीयवस्तुरहिता | ८८ |
| स्निग्धस्वारान्मणीभिः | ५३ |
| स्फुरच्छायं स्फीतागम | १२ |
| स्फुरति भुवि समृद्ध | १११ |
| स्वकरकरजै | १६४ |
| स्वर्गान्निर्गलिता | ४१ |
| स्वभक्त विच्छेदविशेष | १८७ |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com

| श्लोकांशम् | पृष्ठम् |
|---|---|
| स्वयं विसिस्मापयिषु | १५० |
| स्वर्ण स्वर्ण प्रसूनप्रकर | ४६ |
| स्वादसञ्जताम्बरं | ४४ |
| स्वायत्तीकृतपरभूभुजो | १६७ |
| स्वीयामत्र वनप्रियः | १६० |

(ह)

| श्लोकांशम् | पृष्ठम् |
|---|---|
| हरितालहिङ्गुलं | ६४ |
| हंसाःहंसवधू | २४ |
| हं हो दुःशठकर्मकर्मठज | ७८ |
| हारा भारायमाणा | ६२ |
| 'हा' रावो वदनाम्बुजे | ६१ |
| हेलोत्पादितमन्दरं | ३४ |

(क्ष)

| श्लोकांशम् | पृष्ठम् |
|---|---|
| क्षुत्क्षामेऽन्नजिघत्सया | ६ |
| क्षेत्रं प्रतिष्ठासु | ७ |
| क्षेत्रे तस्मिन्निलयनिकटे | २५ |


Prateek Pattanaik <pattaprateek@gmail.com> images reprocessed by srujanika@gmail.com